# मिलिये सुपरफ़ाइटर्स से!






मैदान पर सुनील गावस्कर की रग-रग में फड़कता है मुकाबले का जोश.

तभी तो दुनिया उन्हे 'सुपरबैट्समैन' कह कर पुकारती है. पर सुनील गावस्कर कहते हैं— "मैं तो सुपरफ़ाइटर हूँ और मैं अपने बेटे को भी बनाऊँगा सुपरफ़ाइटर. तभी तो मैं उसे बचपन से ही सही दाँव-पेंच सिखा रहा हूँ. जैसे दाँतों की देखभाल के लिये फोरहॅन्स फ़्लोराइड—सड़न के खिलाफ़ सुपरफ़ाइटर."

कीटाणु भोजन के कणों पर असर करते हैं और ऐसे एसिड पैदा करते हैं, जिनसे सड़न शुरू होती है. फोरहॅन्स के सुपरफ़ाइटर में असरकारक फ़्लोराइड है जो दाँतों का इनेमल मज़बूत करके एसिड के हमले को रोकता है.

और फोरहॅन्स का अनोखा एस्ट्रिंजेंट मसूड़ों को कस कर दाँतों को मजबूत आधार देता है, बरसों बरकरार रहने के लिये.

सुनील साहब और कुछ?

"मैं अपने बेटे को देता हूँ फोरहॅन्स सुरक्षा. आप?"



**फोरहॅन्स**

सुरक्षा

३२ बरकरार

GM-113/86 Hn

जिज्ञासा –

# 'शब्दशाला' (Word Factory)

शिष्यः - आचार्य! अद्य मया कुत्रचित् पठितं यत् संस्कृतस्य शब्दनिर्माणसामर्थ्यम् असदृशम्, अनन्तकोटिशब्दाः अत्र निर्मातुं शक्यन्ते इति।

आचार्यः - अनितरसाधारणं संस्कृतस्यैव वैशिष्ट्यम् एतत्। सूक्ष्मातिसूक्ष्मान् भावान् प्रभेदान् च निरूपयितुं शक्नुमः वयं संस्कृतेन।

शि - एवं विशिष्टे सामर्थ्ये सत्यपि अत्र समकालिकशब्दानां महत् दारिद्र्यं दृश्यते इति तु विचित्रं किल?

आ - किं वदाम? कालस्य आवश्यकतानुगुणम् इतः पूर्वम् अत्र नूतनशब्दनिर्माणादिकं न प्रवृत्तम्।

शि - अत्र किं कारणं स्यात्?

आ - सामर्थ्ये सत्यपि प्रवृत्तिं विना कार्यं न भवति किल? प्रवृत्तौ तु आवश्यकता कारणम्। दैनन्दिनव्यवहारः, समकालिकविषयाणां लेखनम्, नूतनाविष्कारे प्रयत्नः इत्यादयः यदि कृताः स्युः तर्हि आवश्यकता सहजतया उत्पन्ना अभविष्यत्।

वयं संस्कृतज्ञाः तु संस्कृतस्य पूर्वतनं वैशिष्ट्यं सगर्वं प्रतिपादयन्तः कर्तव्यं विस्मृत्य तूष्णीं स्थितवन्तः। वचसा व्यवहारेण च आराधनीया वाग्देवी पुष्पैः आरार्तिकैः च समाराधिता। यस्य च परिणामः इदानीं सर्वत्र अनुभूयते।

संस्कृतस्य वर्तमानपरिस्थितेः कारणानि निरन्तरं विदेशीयानाम् आक्रमणं, राजाश्रयराहित्यम् इत्यादयः अपि। तया दृष्ट्या विचार्यमाणे संस्कृतम् इदानीम् एवंरूपेण लभ्यते इत्येव विशेषः। इतरत्र कुत्रापि यदि एतादृशं प्रवृत्तं स्यात् तर्हि तत्रत्या भाषा नामावशिष्टा अभविष्यत्। अतः पूर्वजाः सर्वथा स्तुत्यर्हाः।

किन्तु कर्तव्यलोपः तैः आचरितः इति तु गोपयितुं न शक्यते। एतस्य

निवारणं तु स्वाधीनम् आसीत् किल?

शि - तत् अस्तु तावत्। वयं समस्यां जानीमः। समस्यामूलम् अपि जानीमः एव। परिहारविषये अपि अस्माकं आग्रहः अस्ति। तथापि किमर्थं वा इष्टसिद्धिः न दृश्यते?

आ - वत्स! संस्कृतम् अधीतवन्तः सर्वे शब्दनिर्माणं कर्तुं न शक्नुवन्ति। अस्य अभिप्रायः तेषां सामर्थ्यं नास्ति इति न। तैः निर्मितेषु शब्देषु प्रामाण्यं न भवेत्। शब्दपरिपाकः च न दृश्येत। तदर्थम् अस्माकं कल्पना एवम् अस्ति – शरीरे हस्तपादादयः इव चिन्तितस्य कार्यान्वयनार्थं काचित् कार्यकर्तॄणां श्रेणी। मनोहृदयादयः (Mind and Hart) इव कार्यसञ्चालनार्थं जीवपूरणार्थं च अन्या कार्यकर्तृश्रेणी। शिरसः (बुद्धेः) कार्यं कर्तुं च अपरा श्रेणी। एषा एव 'शिष्टमण्डली' इति अभिधानम् अर्हति।

शि - शिष्टमण्डली? व्याकरणादिग्रन्थेषु तत्र तत्र उल्लिख्यमानानां शिष्टानां समूहः?

आ - आम्, ते एव शिष्टाः अभिप्रेताः। अथवा एवं वा चिन्तयतु – ये इदमित्थम् इति अधिकारपूर्वकं वक्तुं शक्नुवन्ति, ये च अनुभववृद्धाः ते एव 'शिष्टाः' इति।

शि - ततस्ततः?

आ - एतादृशी शिष्टमण्डली तत्र तत्र भवेत्। एषा संस्कृतप्रचारार्थम् आवश्यकं समग्रं बौद्धिककार्यं करोति। शब्दक्षेत्रदृष्ट्या एका 'शब्दशाला' (Word Factory) भवेत्, या च शब्दसाधुत्वादिविषये अन्तिमं प्रमाणम्।

इस्रेलदेशस्य कथां जानाति खलु भवान्? कदाचित् हिब्रूभाषायां द्वित्रसहस्रशब्दाः केवलम् उपलभ्यन्ते स्म! इदानीं तु अत्याधुनिकाः वैज्ञानिकाः विषयाः अपि तस्यां भाषायां प्रतिपाद्यन्ते। तादृशी शब्दशक्तिः तस्याः। तत्रापि पूर्वोक्तः एव क्रमः अनुसृतः।

शि - 'शब्दशाला' इति विषयः किं कल्पनामात्रम्, उत....?

आ - कल्पनामात्रं न। इदानीं 'शब्दशाला' कार्यारम्भं कृतवती इव। इतःपूर्वम् एव तया प्रयोगपूर्वकं कश्चन कार्यमार्गः अन्विष्टः अपि।

शि - 'शब्दशाला'! रमणीया योजना एषा!



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अक्षक्रीडा – The game of dice
अङ्गुलिगणनीयाः - A handful
अण्डम् – Egg
अन्यथाभावः – Misunderstanding
अभिज्ञानम् – Recognition
अयः – Iron
आन्दोलिका – Cradle
आरार्तिकम् – Aarathi
इष्टिका – Brick
उत्तरीयम् – An upper garment
उदभाण्डम् – A Vessel for storing water
उद्बुद्धः – Awakened
ऊषरा – Barren land
कटः – Mat
कदलीपत्रम् – Banana leaf
कार्पण्यम् – Miserliness
कार्यान्वयनम् – Implement
कुसूलः – Granary
खातः – Valley
गुञ्जनम् – Melodious sound
चषकः – Cup
चिक्रोडः – Squirrel

डोलायमाना – Rocking
तक्षकः – Carpenter
तन्तुवायः – Weaver
दूरदर्शिता – Foresight
द्रोणी – Bucket
धूमपानम् – Smoking
नवनीतम् – Butter
प्रक्रिया – Process
भञ्जनम् – Breaking
भित्तिः – Wall
मधुर्मक्षिका – Honey-bee
यावानलः – A food-grain
रजतस्थालिका – Silver plate
वराटकम् – Cowrie
वस्त्रान्तरितः – Covered by cloth
विकत्थनम् – Boasting
वृश्चिकः – Scorpion
वेमा – Loom
वेष्टिः – Dhoti
व्यजनम् – Fan
समीकरणम् – Repair
सुधाखण्डः – Piece of chalk

* * * *



# चन्दमामा

संस्थापकः– **'चक्रपाणिः'** सञ्चालकः– **'नागिरेड्डी'**

**मू**लपठनेन इव अनुवादपठनेन व्याख्यानपठनेन वा तृप्तिः न भवति। किमर्थम्?

अलङ्कारशास्त्रकाराः रसविषये वदन्ति– 'स्थायिभावाः श्रोतृषु भवन्ति। सन्निवेशस्य पठनेन दर्शनेन वा ते उद्बुद्धाः भवन्ति। तदा च रसः आस्वाद्यते' इति। प्रायः एषा एव प्रक्रिया शब्दस्थले अपि प्रचलति। विशिष्टाः शब्दाः एव विशिष्टं भावं (अर्थं) जागरयितुं शक्नुवन्ति। अनुवादव्याख्यानादयः अङ्गुलिदर्शनेन इव दूरतः (समीपतः वा) तं सङ्केतयन्ति। किन्तु साक्षात् तम् एव भावं प्रकाशयितुं न शक्नुवन्ति। कदाचित् शक्नुयुः अपि, यदि मूलकासमानः समर्थः अनुवादकः लभ्येत।

अतः एव 'वेदादयः शब्दपरिवर्तनं न सहन्ते' इति उच्यते। तत्र स्वरादीनां तावत् प्राधान्यं दीयते च। सर्वेऽपि वेदशब्दाः महतः अनुभवस्य (तपसः) फलम्।

एवं च सिद्धं यत् भावस्पष्टतार्थं विशिष्टाः शब्दाः आवश्यकाः, ये च नितरां परिपाकं प्राप्तवन्तः स्युः। व्याकरणदृष्ट्या साधवः चेदपि सर्वे शब्दाः भावप्रकाशनार्थं समर्थाः भवन्ति इति नास्ति।

अतः शब्दनिर्माणार्थं काचित् विशिष्टा प्रतिभा अपेक्षिता। निर्मितस्य प्रयुक्तस्य च परिपक्वताज्ञानार्थं योग्यता अपि काचित् अपेक्षिता।

सम्पुटः - ३ फेब्रवरी-८७ सञ्चिका - ११

प्रतिकृतिमूल्यं रू. २-५० * वार्षिकं ग्राहकशुल्कं रू ३०-००






CHITRA





बबलूजी का मन घबराए
खेले बिना रहा ना जाए
बीमारी आड़े आ जाए,
संगी साथी पास न आए.

फिर एको एको के आए
१२ रंगबिरंगी साथी
कागज झूमा एको रंग में
बन गए तोता, बंदर, हाथी

एको हरे और एको पीले
लाल और ऑरेंज, भूरे, नीले
काले, बैंगनी, वायलेट, गुलाबी
अब तो स्केच पेन एको ही लें

# एको
## स्केच पेन  रंगों से यारी, मौज-मस्ती तुम्हारी!




प्रीसिज़न राइटिंग पॉइन्ट्स प्रा. लि. १८, सुभाष रोड, विले पारले (पूर्व), बम्बई-४०० ०५७.
फोन : ६०४०३०५, ६०४३५५६.

# र स वा र्ता:




## निद्रां विना जीवनम्

मानवजीवने यथा आहारः, तथैव निद्रा अपि अत्यावश्यकी। निद्रां विना कानिचन दिनानि यावत् अपि मानवः जीवितुं न शक्नोति। किन्तु क्यूबाप्रदेशे टोमास् इर्जाक्विया डों नामकः निद्रां विना एव जीवितवान्। क्यूबा निवासी मनोविज्ञानी पेड्रोगार्षिया वदति यत् प्रपञ्चेतिहासे एव एषः अपूर्वः उल्लेखार्हः प्रसङ्गः, यतः इतःपूर्वम् एवं कदापि न प्रवृत्तम् इति।

## दीर्घायुष्यस्य रहस्यम्



ब्रिटन्देशीयः १०८ वर्षीयः वृद्धः आत्मनः दीर्घकालिकस्य जीवनस्य कारणत्रयं वदति। तानि च– मद्यस्य दूरीकरणम्, धूमपानस्य असेवनम्, कस्मिंश्चित् कार्ये सदा व्यापृतिः च।



## प्राणिनां स्मरणशक्तिः

चिम्पाजी, ओराङ्गु, उटाङ्ग, गजः, गोरिल्ला, शुनकः, अश्वः, सीलियन्, भल्लूकः, मार्जारः इत्यादिनां प्राणिनां स्मरणशक्तिः, ग्रहणशक्तिः च भवति इति न्यूयार्कप्रान्तीयः नीड्ब्लेयर् अभिप्रैति।

पुराणगाथावली –

# जयन्ती

पूर्वं कदाचित् राक्षसगुरुः शुक्रः कैलासपर्वते शिवं ध्यायन् तपः आरब्धवान्। 'शुक्रस्य तपः यदि फलेत् तर्हि अस्माकम् अपायः एव' इति चिन्तितवन्तः देवाः।

अतः ते शुक्राचार्यस्य तपसः भङ्गार्थम् एकम् उपायं चिन्तितवन्तः। तदनुगुणं ते सर्वे सम्भूय अपूर्वसौन्दर्यवत्याः इन्द्रकुमार्याः जयन्त्याः समीपं गत्वा उक्तवन्तः– "देवानां हितेच्छया भवत्याः साहाय्यं प्रष्टुम् आगतवन्तः वयम्" इति।

जयन्ती आश्चर्येण पृष्टवती– "कीदृशं साहाय्यम् अपेक्षितम्?" इति।

"भवती 'अवश्यं करोमि' इति यदि वदेत् तर्हि वयं वदेम" इति उक्तवन्तः देवाः।

"देवानां क्षेमार्थम् अहं किं वा न कुर्याम्? मया किं करणीयम् इति वदन्तु। क्षणमात्रेण तत् सम्पादयिष्यामि। सन्देहः मास्तु" इति उक्तवती मुग्धा जयन्ती।

"कैलासपर्वतं गत्वा, तत्र तपसि लीनस्य शुक्रस्य सेवा करणीया, सः भवत्या परिणेतव्यः च" इति उक्तवन्तः देवाः।

"शुक्रस्य तपोभङ्गार्थम् एव एते एवं प्रार्थयन्तः सन्ति" इति जयन्ती ज्ञातवती। अन्यस्य पतनस्य कारणं भवितुम् न इच्छति सा। अविचार्य देवेभ्यः वचनं तु दत्तम् एव। अतः सा मुनिकन्यकारूपेण कैलासपर्वतं गत्वा शुक्रस्य शिष्यत्वम् अङ्गीकृत्य भक्त्या श्रद्धया च सेवां कर्तुम् आरब्धवती।

केषुचित् दिनेषु शुक्रस्य तपः फलितम्। सः शिवस्य अनुग्रहेण वरं प्राप्तवान्। अनन्तरं जयन्त्याः परिचर्यया सन्तुष्टः सः वरं दातुम् इच्छन् तां पृष्टवान्– "भवती किम् इच्छति?" इति। ता तस्य परिणये इच्छां प्रकटितवती। शुक्रः सन्तोषेण तां परिणीतवान्।

जयन्ती शुक्रस्य तपसः भङ्गम् अकृत्वा एव, 'असुरगुरुं परिणेष्यामि' इति वचनं देवेभ्यः यत् दत्तवती तत् पालितवती!





# संन्यासव्रतम्

गोदावरीनद्याः तीरे शिवस्वामी नाम संन्यासी आसीत्। सः तत्र एकस्मिन् लघुकुटीरे वसति स्म। शिवस्वामी भिक्षार्थं प्रतिदिनं पार्श्वस्थं ग्रामं गच्छति। श्रद्धावत्सु गृहस्थेषु यः कोऽपि तस्मै भोजनं ददाति। तेन तृप्तः शिवस्वामी साक्षात् कुटीरं प्रतिगच्छति। अन्यत्र कुत्रापि न गच्छति।

एव क्रमः तस्य।

तस्य ग्रामस्य भूस्वामी एतं संन्यासिनं सम्यक् जानाति। संन्यासिनः विषये महती श्रद्धा तस्य। सः भूस्वामी एकस्मिन् दिने कुटीरम् आगत्य संन्यासिनम् उक्तवान्– "स्वामिन्, भवान् प्रतिदिनं भिक्षार्थं ग्रामं गच्छति। तेन भवतः श्रमः, तपसः भङ्गः, समयहानिः च। अतः अहम् इतःपरम् प्रतिदिनं भोजनम् अत्र एव प्रेषयिष्यामि। तथैव सर्वाः अपेक्षाः पूरयिष्यामि। केनापि कारणेन भवता बहिः गन्तव्यं न भवेत्" इति।

तदा संन्यासी हसन् उक्तवान्– "अहं दिने एकवारम् एव भोजनं करोमि। मम बुभुक्षा ग्रामस्थैः निवार्यते। धर्तुम् एका लघुवेष्टिः, एकं उत्तरीयं च अपेक्षितम्। तदपि ग्रामस्थाः एव यच्छन्ति। अन्यत् किमपि न आवश्यकं मम। दैवानुग्रहेण एतेन एव तृप्तः अस्मि" इति।

संन्यासी सर्वसङ्गपरित्यागी इति ज्ञातवान् भूस्वामी। संन्यासिनः पादयोः नमस्कारं कृत्वा मौनं कुटीरतः बहिः गतवान्।

तस्मिन् समये कुटीरमार्गेण एव शङ्करः नाम कश्चित् अनाथबालकः गच्छन् आसीत्। सः संन्यासिनः वचनानि श्रुतवान्। अनन्तरं भूस्वामिना कृतं नमस्कारम् अपि दृष्टवान्। तेन कारणेन संन्यासिनः विषये बालकस्य गौरवम् उत्पन्नम्। सः अपि कुटीरस्य अन्तः गत्वा संन्यासिनं साष्टाङ्गं नमस्कृतवान्।



संन्यासी आशीर्वादं कृत्वा "भवान् कः? किम् आवश्यकम्"? इति शङ्करं पृष्टवान्।

तदा बालकः– "श्रीमन्, अहम् अनाथः अस्मि। अहम् अत्रैव स्थित्वा भवतः सेवां करोमि। कृपया अनुमतिः दातव्या" इति संन्यासिनं प्रार्थितवान्।

"अस्तु, भवान् यथा इच्छति तथा एव भवतु" इति संन्यासी शिवस्वामी तस्मै अनुमतिं दत्तवान्।

शङ्करः श्रद्धया प्रतिदिनम् अपि कुटीरस्य स्वच्छतां करोति स्म। संन्यासिविषयकः भक्तिभावः गौरवं च दिने दिने वर्धते स्म बालकस्य।

कदाचित् संन्यासी "अहं तीर्थयात्रां गच्छामि" इति शङ्करम् उक्तवान्। तदा शङ्करः संन्यासिनः पादौ गृहीत्वा उक्तवान्– "श्रीमन्, भवता सह एव स्थातुं कृपया मह्यम् अनुमतिं ददातु। अहम् अपि आगच्छामि" इति।

संन्यासी शिवस्वामी एतत् अनिच्छन् उक्तवान्– "शङ्कर, एतावत्पर्यन्तं श्रद्धया मम सेवां कृतवान् भवान्। तेन अहम् अतीव सन्तृप्तः अस्मि। इदानीं मया सह तीर्थयात्रा करणीया इति भवतः इच्छा अपि सहजा, प्रशंसार्हा च। किन्तु तदर्थम् इतोऽपि समयः अस्ति। इतोऽपि किञ्चित्कालं सहनया तिष्ठतु। भवतः विषये एतस्य ग्रामस्य भूस्वामिनं सूचयामि। कृषिकार्यार्थं सः किञ्चित् क्षेत्रं भवते दास्यति। तेन भवान् सुखं जीवतु" इति।

तदा शङ्करस्य वयः षोडशवर्षाणि। गुरुणा उक्तं वचनं श्रुत्वा दुःखेन सः उक्तवान्– "श्रीमन्! प्रापञ्चिकसुखविषये मम इच्छा नास्ति। अस्मिन् कुटीरे एव स्थित्वा दिने एकवारं भोजनं कुर्वन् यथा भवान् कालं यापितवान् तथैव अहं कालं यापयामि" इति।

संन्यासी किमपि न उक्तवान्। हसन् केवलं शिरः चालितवान्। परेद्युः एव शिवस्वामी तीर्थयात्राम् आरब्धवान्।

यद्दिने संन्यासी कुटीरं त्यक्त्वा तीर्थयात्रां गतवान्, तद्दिनादारभ्य तस्य शिष्यं



शङ्करं सर्वेऽपि शिष्यसंन्यासी इति आह्वयन्ति स्म। शङ्करस्य समीपे लघुवस्त्रद्वयम्, जलस्थापनार्थम् एकः घटः च आसीत्। अन्यत् किमपि न आसीत्।

कस्याञ्चित् रात्रौ शङ्करस्य वस्त्रं मूषकाः छिन्नं कृतवन्तः। प्रातःकाले सः स्वकीयवस्त्रस्य स्थितिं दृष्टवान्। तस्मिन् समये कुटीरमार्गतः कश्चित् ग्रामस्थः गच्छन् आसीत्। शङ्करः वस्त्रस्य स्थितिं ग्रामस्थम् उक्तवान्।

तदा ग्रामस्थः शङ्करं बोधितवान्– "भवता अपृष्टः अपि अहम् अपरम् एकं वस्त्रं भवते दद्याम्। किन्तु तावता एव भवतः कष्टं न निवार्यते। मूषकाः तदपि कदाचित् छिन्नं कुर्युः। अतः यदि भवान् एकं मार्जालं पालयति तर्हि समीचीनम्" इति।

मार्जालः पालनीयः इति विषयं श्रुत्वा सम्भ्रान्तः शङ्करः उक्तवान्– "एकस्य कौपीनस्य रक्षणार्थं मार्जालं पालितवतः, संसारसागरे निमग्नस्य संन्यासिनः कथां कुत्रचित् श्रुतवान् अस्मि। मम अपि तादृशी एव दुर्गतिः आपतेत्" इति।

तस्य वचनेन ग्रामस्थः हसन् उक्तवान्– "श्रीमन्! सा तु कल्पिता कथा, न तु सत्यकथा। सत्यम् एव चेत् अपि तस्य संन्यासिनः भवादृशः मनोनिग्रहः न आसीत् इति मन्ये। भवान् तु महात्मनां शिष्यः, मनोनिग्रही अपि। कल्पितकथायाः तस्याः स्मरणेन किमर्थं भीतः भवति?" इति।

शङ्करः किमपि न उक्तवान्। मौनं स्थितवान्। परेद्युः सः ग्रामस्थः एकं मार्जालशिशुम् आनीतवान्। संन्यासिनः कुटीरे मार्जालशिशुं त्यक्त्वा गतवान् च।

सः मार्जालशिशुः इदानीम् अपि स्वयम् आहारं सम्पादयितुं न शक्नोति। अतः बुभुक्षां सोढुम् अशक्तः सः आदिनं "मियांव् मियांव्" इति रोदनं करोति स्म।

शङ्करः मार्जालस्य एतं रोदनविषयं अन्यं कञ्चित् ग्रामस्थम् उक्तवान्। तदा सः ग्रामस्थः उक्तवान्– "भोः, मार्जालशिशोः लघुप्राणिनः बुभुक्षापीडनं नाम महान् पापकरः विषयः एव। भवान् गत्वा भूस्वामिनं पृच्छतु। सः निश्चयेन एकां धेनुं भवते दास्यति" इति।



एतदेव उचितम् इति सः साक्षात् भूस्वामिनः गृहं गतवान्। शिवस्वामिनः शिष्यस्य शङ्करस्य विषये भूस्वामिनः अतीव गौरवम्। सः तस्मै उत्तमाम् एकां धेनुं दत्तवान्।

एकः सप्ताहः अतीतः। ग्रामस्थः राजशेखरः कुटीरम् आगत्य शङ्करम् उक्तवान्– "मार्जालशिशोः पालनार्थं धेनोः क्षीरम् आवश्यकम् इति तु सत्यम् एव। समीचीनम्। किन्तु धेनोः रक्षणम् अपि चिन्तनीयं किल? भवतः धेनुः क्षीणा अस्ति। पापकरः विषयः एषः। धेनोः रक्षणार्थं हरिततृणानि जलादिकं च आवश्यकं भवति। कुटीरं परितः विद्यमाना ऊषरभूमिः भूस्वामिनः एव। यदि भवान् तस्य अनुमतिं पृच्छति, तर्हि अहम् एतत् सर्वं कर्षणेन निर्मलं करोमि। आगते आये अर्धं भवतः, अर्धं मम। किं वदति? तदा भवतः भोजनार्थं वसत्यर्थं च अन्येषां याचनस्य आवश्यकता एव नास्ति। धेनोः रक्षणार्थं हरिततृणानि अपि यथेष्टं लभ्यन्ते तस्मिन् क्षेत्रे" इति।

एतत् उत्तमं चिन्तनम् इति शङ्करः चिन्तितवान्। राजशेखरस्य सूचनानुसारं भूस्वामिनं पृष्टवान् च। तदा भूस्वामी "एतस्याः नद्याः कुटीरस्य च मध्ये विद्यमानस्य क्षेत्रस्य भवान् एव स्वामी इति चिन्तयतु। तत्र मम किमपि नास्ति। भवते एव दत्तवान् अस्मि" इति अनुमतिं दत्तवान्।

एतेन शङ्करः अतीव सन्तुष्टः। कृषीवलेन राजशेखरेण सह संन्यासी शङ्करः अपि कार्यम् आरब्धवान्। प्रधानतया ते व्रीहिम् आरोहितवन्तः। फलसमृद्धिः समीचीनतया जाता। धान्यस्य रक्षणार्थं कुटीरम् उन्मूल्य तस्मिन् स्थाने कुसूलम्, अन्यप्रकोष्ठं च निर्मितवान् शङ्करः।

एतां अभिवृद्धिं दृष्ट्वा शङ्करः अतीव सन्तोषम् अनुभवति स्म। कृषीवलस्य राजशेखरस्य पत्नी, प्राप्तवयस्का पुत्री च तस्मिन् क्षेत्रे शाकादीन् अपि वर्धितवत्यौ। ते एव पाकं कृत्वा शङ्कराय परिवेषयतः स्म च।

अनन्तरवर्षे तस्य क्षेत्रस्य फलसमृद्धिः द्विगुणिता जाता। स्वकीये अर्धभागे व्ययार्थं

किञ्चित् स्थापयित्वा अवशिष्टधान्यानि योग्यमूल्येन विक्रीतवान् शङ्करः।

राजशेखरः कदाचित् शङ्करम् उक्तवान्– "कालः सर्वदा एकरीत्या एव न तिष्ठति। जीवने अस्मदीयः इति यः कोऽपि आवश्यकः एव। मम पुत्रीं भवान् पश्यन् एव अस्ति। इतोऽपि अनुकूलकरी न लभ्येत पुनः। अतः यदि भवान् तां परिणेष्यति, तर्हि सा शाश्वतं भवदीया एव भविष्यति किल?" इति।

राजशेखरस्य पुत्र्याः विनय-विधेयतादयः, कार्येषु चातुर्यम्, तस्याः चनलवलनादयः, हावभावादयः च शङ्करस्य इष्टकराः एव आसन्। सा प्राप्तवयस्का अपि। पुनः किम्? निरातङ्कं तां परिणीतवान् सः।

तद्दिनादारभ्य सर्वेऽपि तं शङ्कर इत्येव आह्वयन्ति स्म। सः संन्यासिनः शिष्य आसीत् इति विषयं जनाः विस्मृतवन्तः।

एवमेव कानिचन वर्षाणि अतीतानि। शङ्करस्य द्वौ पुत्रौ जातौ। प्रौढौ तौ अपि कृषिकार्ये पित्रे राजशेखराय च साहाय्यं कुरुतः स्म।

किञ्चित्कालानन्तरं वृद्धः भूस्वामी दिवङ्गतः। अधिकारस्थानम् आगतः तस्य पुत्रः शङ्करस्य समीपम् आगत्य पृष्टवान्– "भवतः कृषिक्षेत्रं प्रत्यर्पयतु" इति। तदा शङ्करः "भूस्वामी मह्यं दानरूपेण दत्तवान् अस्ति। भवान् पुनः पृच्छन् अस्ति। एतत् अन्याय्यम् एव" इति विवादं कृतवान्। तेन कारणेन ग्रामस्थेषु केचन शङ्करस्य पक्षीयाः, केचन भूस्वामिनः पक्षीयाः च सञ्जाताः।



एवं पक्षद्वयं, तयोः मध्ये कलहः च वर्धितः। एकस्मिन् दिने भूस्वामिनः पक्षीयाः शङ्करस्य गृहस्य उपरि आक्रमणं कृतवन्तः। शङ्करपक्षीयाः तेषां प्रतिस्पर्धिनः जाताः। उभयपक्षीयाः अपि दण्डेन ताडयन्तः कलहं कुर्वन्ति स्म। तस्मिन् समये सौभाग्यवशात् तीर्थयात्रां गतः शिवस्वामी तत्र आगतवान्।

सर्वे तं दृष्ट्वा साक्षात् कलहं स्थगितवन्तः। नमस्कारं कृत्वा शिरः अवनमय्य तस्य पुरतः स्थितवन्तः च।

शिवस्वामी तान् पृष्टवान्– "पञ्चविंशतिवर्षेभ्यः पूर्वम् एतस्मिन् प्रदेशे एकः कुटीरः आसीत्। तत्र मम शिष्यः आसीत्। तस्य कुटीरस्य किं जातम्?" इति।

तं प्रश्नं श्रुत्वा शङ्करः दुःखेन शिवस्वामिनः पादयोः उपरि पतितवान्। शिवस्वामी तम् उत्थाप्य प्रीत्या आशीर्वादं कृतवान्। भूस्वामिनः पुत्रः अन्ये ग्रामस्थाः च अपि तं नमस्कृतवन्तः।

शिवस्वामी तस्याः भूमेः समस्याम् उचितरीत्या परिहृतवान्। उभयपक्षयोः अपि तृप्तिपूर्वकं परिहारमार्गं सूचितवान्।

तस्मिन् दिने रात्रौ शङ्करः शिवस्वामिनम् उक्तवान्– "श्रीमन्, तीर्थयात्रागमनसमये भवता सह आगन्तुं मह्यम् अनुमतिं न दत्तवान् भवान्। किञ्चित्कालं सहनया तिष्ठतु इति उक्तवान्। कीदृश कटुसत्यं तत्!" इति।

शिवस्वामी हसन् तूष्णीं स्थितवान्। तदा शङ्करः शिवस्वामिनः पादौ गृहीत्वा उक्तवान्– "इतःपरम् अहं संन्यासं स्वीकृत्य निश्चयेन भवन्तम् अनुमन्तुं शक्नोमि" इति।

शिवस्वामी तस्मै आशीर्वादं कृत्वा उक्तवान्– "संसारकन्दरतः बहिः आगन्तुं भवतः एषः एव उचितः समयः। प्रौढौ भवतः पुत्रौ कृषिकार्यं कुर्वन्तौ मातरं पालयतः" इति।

दिनद्वयानन्तरं शङ्करः संन्यासव्रतं स्वीकृतवन्। लघुवस्त्रद्वयं स्वीकृत्य तं ग्रामं त्यक्त्वा शिवस्वामिना सह प्रस्थितः च।





# संशयशीलः

पूर्वं सुरपुरे रामरायः नाम कश्चन भूस्वामी निवसति स्म। बाल्यतः आरभ्य तस्य पठनविषये महती निरासक्तिः। तदीयविद्याभ्यासार्थं तस्य पिता महान्तं प्रयत्नं कृतवान् आसीत्। तदीयाः सर्वे यत्नाः विफलाः आसन्। इदानीं तु रामरायः मृगयाविहारं, ग्रामस्थानां सकाशतः करसङ्ग्रहणं, स्वादुभोजनम् इति एतावत् एव जानाति।

रामरायस्य अभिप्रायः आसीत् यत् ये सर्वदा चिन्तनमग्नाः भवन्ति ते कुशाग्रमतयः एव इति। तस्य कार्यालये वेङ्कटरामः नाम कश्चित् उद्योगी आसीत्। सः सर्वदा अपि किमपि आलोचयन् एव तिष्ठति। अतः रामरायस्य भावना आसीत्– "वेङ्कटरामः महाबुद्धिमान्" इति।

भूस्वामी तदा तदा वेङ्कटरामं स्वपार्श्वे उपवेश्य पृच्छति– "किं भोः? किं चिन्तयन् अस्ति?" इति। वेङ्कटरामः चिन्तनविषयं निवेदयति। तेन– "अहो! ज्ञानी नाम एषः एव" इति चिन्तयति भूस्वामी।

एकस्यां रात्रौ निद्रितः भूस्वामी केनापि शब्देन जागरितः। सः प्रकोष्ठतः बहिः आगत्य इतः ततः दृष्टवान्। वेङ्कटरामः न शयितवान् आसीत्। उपविश्य एव किमपि चिन्तयति स्म। तत् दृष्ट्वा भूस्वामी तं पृष्टवान्– "किं चिन्तयन् अस्ति वेङ्कटराम?" इति।

"भोः, चोराः चौर्यार्थम् अमावास्यारात्रौ एव किमर्थं गच्छन्ति इति चिन्तयन् आसम्" इति उक्तवान् वेङ्कटरामः।

तस्य वचनेन तृप्तः भूस्वामी स्वप्रकोष्ठं गत्वा शयनं कृतवान्। किन्तु अनन्तरं तस्य निद्रा न आगता। वेङ्कटरामः इदानीं किं चिन्तयन् अस्ति इति ज्ञातव्यम् इति कुतूहलम् उत्पन्नम्।

भूस्वामी पुनः बहिः आगत्य "किं भोः वेङ्कटराम, शयितवान् वा?" इति

पृष्टवान्।

"न, चोराः चौर्यार्थं धनिकानां गृहम् एव किमर्थं गच्छन्ति इति चिन्तयन् आसम्" इति उक्तवान् वेङ्कटरामः।

भूस्वामी तस्य उत्तरं श्रुत्वा "वेङ्कटरामः कीदृशः चिन्तनशीलः!" इति वदन् पुनः स्वप्रकोष्ठं गत्वा शयनं कृतवान्। किञ्चित्कालानन्तरं तस्य निद्रा आगता।

प्रातःकालसमये जागरितः भूस्वामी प्रकोष्ठतः बहिः आगत्य दृष्टवान्। तदानीम् अपि शय्यायाम् एव उपविश्य चिन्तयन्तं वेङ्कटरामं सः पृष्टवान्– "इदानीं किं चिन्तयन् अस्ति भोः?" इति।

"भोः, इदानीं किञ्चित्कालात् पूर्वं चोराः भवतः अयसः पेटिकायां विद्यमानं धनं सर्वं नीतवन्तः। तावत् धनं ते किं कुर्युः इति चिन्तयन् अस्मि" इति उक्तवान् वेङ्कटरामः।

तत् श्रुत्वा भूस्वामिनः रामरायस्य हृदयं स्तब्धम् इव। सः शीघ्रं प्रकोष्ठं गत्वा दृष्टवान्। अयसः पेटिका रिक्ता आसीत्।

सः वेङ्कटरामस्य समीपम् आगत्य कोपावेशेन उक्तवान्– "भोः बुद्धिहीन, यदा चोराः चौर्यं कुर्वन्तः आसन्, तदा भवान् तूष्णीं पश्यन् आसीत् वा? उच्चैः यदि कोलाहलं कृतवान् स्यात् तर्हि वयं सर्वेऽपि तान् चोरान् ग्रहीतुं शक्ताः अभविष्याम किल? किं जातं भवतः?" इति।

वेङ्कटरामः किमपि न उक्तवान्।

भूस्वामी तं कोपेन पश्यन्– "किं भोः, सम्भाषणं न करोति?" इति पुनः पृष्टवान्।

"भोः, कथं सम्भाषणं करोमि? चौर्यसमये उच्चैः कोलाहलः करणीयः इति किमर्थम् अहं न ज्ञातवान् इति चिन्तयन् आसम्" इति उक्तवान् वेङ्कटरामः।

एतेन प्रसङ्गेन भूस्वामी 'कः संशयशीलः, चिन्तनशीलः च कः' इति ज्ञातवान्। अप्रयोजकान् तादृशान् संशयशीलान् स्वकार्यालयतः निष्कास्य उत्तमान् एव नियोजितवान्।






## ८

(अमरपालस्य नायकत्वे गताः सैनिकाः भयङ्करपक्षिणः अग्निना दाहितवन्तः। 'राजकुमारीं कान्तिमतीं शिबिकायाम् उपवेश्य कुत्रापि नयन्तः सन्ति' इति वार्ता आगता। तत् श्रुत्वा चित्रसेनः उग्राक्षः च सैनिकैः सह तान् व्याघ्रचर्मधारिणः अनुसृतवन्तौ। व्याघ्रचर्मधारिणः मरणम् अपि प्राप्तुं सिद्धाः सन्तः युद्धार्थम् उद्युक्ताः अभवन्। तदनन्तरम्.....)

**व्या**घ्रचर्मधारिणां नायकः स्वकीयान् अनुचरान् उद्दिश्य यत् कठोरम् आज्ञापितवान् तेन उग्राक्षः चित्रसेनः च जागरूकौ जातौ। 'यदि शत्रवः कान्तिमतीं मारयेयुः तर्हि सर्वोऽपि प्रयत्नः विफलः भवेत्। अतः राजकुमारीसमीपं यावत् न गच्छेयुः ततः पूर्वम् एव ते नाशनीयाः' इति चिन्तयित्वा तौ युद्धार्थं सन्नद्धौ जातौ।

एकपार्श्वतः चित्रसेनः, अपरपार्श्वतः उग्राक्षः, इतरपार्श्वाभ्यां सैनिकाः, राक्षसानुचराः च अकस्मात् आक्रमणं कृतवन्तः। राक्षसानां शिलामय्यः गदाः, सैनिकानां तीक्ष्णाः खड्गाः च निर्दयं शत्रून् मारितवन्तः। शत्रवः च प्रतिक्रियां प्रदर्शयितुम् अपि असमर्थाः सन्तः मरणं प्राप्नुवन्ति स्म। मरणासन्नानाम् आक्रन्दनं कर्णकठोरम् आसीत्।

आत्मनः सैनिकाः मरणं प्राप्नुवन्तः सन्ति




इति ज्ञात्वा क्रुद्धः व्याघ्रचर्मधारिणां नायकः एकेन हस्तेन खड्गम्, अपरेण हस्तेन शूलायुधं च गृहीत्वा गर्जनं कृतवान्– "इतःपरं वयम् एतेभ्यः राक्षसेभ्यः आत्मानं रक्षितुं न शक्नुमः एव। अतः प्रथमं राजकुमारीं मारयन्तु" इति।

'कान्तिमत्याः रक्षणे अहं सफलः भवेयं वा न वा' इति सन्देहः उत्पन्नः चित्रसेनस्य मनसि। यतः कान्तिमतीसमीपं गन्तुम् इतोऽपि दशाधिकाः शत्रवः मारणीयाः। तद्विना शिबिकायाः समीपं गन्तुं मार्गान्तरं नास्ति एव। ततः पूर्वम् एव शत्रुषु कश्चित् राजकुमारीं नाशयेत् चेत्....? एतया कल्पनया एव चित्रसेनः भीत्या कम्पितः अभवत्।

चित्रसेनः कोपावेशेन शत्रून् निर्दयं मारयन् वेगेन अग्रे गतवान्। तस्य खड्गचालनं तावत् तीव्रम् आसीत् यत् कोऽपि शत्रुः तस्य समीपम् आगन्तुं न शक्नोति स्म।

तदा अकस्मात् शिबिकायाः द्वारम् उद्घाटितम्। कान्तिमती शिबिकातः अवतीर्य पार्श्वे पतितस्य कस्यचित् सैनिकस्य हस्ततः खड्गं स्वीकृत्य समीपम् आगतान् शत्रून् सम्मुखीकर्तुम् आरब्धवती।

तत् दृष्ट्वा उग्राक्षः अरण्यं कम्पयन् इव गर्जनं कुर्वन्– "एषः अहम् आगतः कान्तिमति! आत्मनः क्षत्रियकुलोत्पत्तिं सार्थकीकृतवती भवती। साधु साधु" इति उक्तवान्। विघ्नभूतान् शत्रुसैनिकान् गदाप्रहारेण आकाशे उत्क्षिपन् शिबिकायाः समीपं गतवान्। तावति काले चित्रसेनः अपि तत्र आगतवान्। उभौ अपि रक्तसिक्तं खड्गं धृतवतीं रुद्रकाली इव दृश्यमानां कान्तिमतीं साभिमानं दृष्टवन्तौ।

"एषः चित्रपुरराज्यस्य परिपालकः चित्रसेनः। क्षत्रियवीरः राजकुमारः। अहम् उग्राक्षः। एतस्य स्नेहितः। एषः अरण्यप्रदेशः मदीयः एव" इति स्वस्य चित्रसेनस्य च परिचयम् उक्तवान् उग्राक्षः।

कान्तिमती उग्राक्षं कोपेन पश्यन्ती चित्रसेनस्य उपस्थितिम् उदासीनभावनया निर्लक्ष्य तिरस्कारं प्रकटयन्ती शिबिकां पुनः आरूढवती।



राजकुमार्याः कान्तिमत्याः व्यवहारेण चित्रसेनः कुपितः। 'अहं तु प्राणान् पणीकृत्य शत्रून् नाशयन् अस्मि। एतस्याः रक्षणार्थम् एव मम एषः प्रयत्नः। एषा तु कृतज्ञतां किम्, अनादरं प्रकटयन्ती शिबिकां प्रविष्टवती। माम् अपमानयितुम् इच्छति एषा' इति चिन्तितवान् उग्राक्षः। इदानीं तत्र शत्रुः कोऽपि न आसीत्। शत्रुनायकः अपि मृतः आसीत्।

"उग्राक्ष! अस्माकं कार्यं समाप्तम्। व्यर्थं समययापनेन किमपि प्रयोजनं नास्ति। सैनिकैः सह धवलगिरिं गच्छामः तावत्' इति उक्तवान् चित्रसेनः।

चित्रसेनस्य आन्तर्यं न ज्ञातवान् उग्राक्षः। "पूर्वं तु चिन्तितम् आसीत् यत् कपिलपुरं वशीकरणीयम् इति। तदनुगुणम् अमरपालः सैन्यसहितः इतः गतवान्। राजद्रोहिणः नागवर्मणः नाशनम् अपि पूर्वं सङ्कल्पितम् आसीत्। इदानीम् एषः चित्रसेनः किम् एतत् वदति? किमर्थम् एवं वदति? मानववीरस्य एतस्य भावनाः ज्ञातुं न शक्यन्ते एव किल?"

"चित्रसेन! कपिलपुरस्य वशीकरणं किल अस्माकं लक्ष्यम्? मध्ये राजकुमारी विपद्ग्रस्ता इति ज्ञात्वा रक्षणार्थम् अत्र आगतवन्तः। भवान् तु...." इति उग्राक्षः वचसा स्खलन् उक्तवान्।

"किम् अस्माभिः राजकुमारी रक्षिता? तथा न इति भाति। राजकुमारी एव अस्मान् रक्षितवती इव व्यवहरति। महता प्रयत्नेन कपिलपुरं वशीकृत्य कस्मै वा अर्पयेम? ज्वालाद्वीपवासिनां साहाय्येन नागवर्मा महाराजं वीरसिंहं बन्दीकृत्य ज्वालाद्वीपे स्थापितवान् इति अमरपालस्य वचनेन ज्ञातम् एव। अस्माकं तु तत् राज्यं न अपेक्षितम्। एवं स्थिते वशीकृतं चेत् कस्मै अर्पणीयम्? वशीकरणेन किं प्रयोजनम्?" इति कोपेन उक्तवान् चित्रसेनः।

चित्रसेनस्य वचनं यावत् समाप्तं तावता कान्तिमती शिबिकातः अवतीर्य समीपम् आगतवती। चित्रसेनं परीक्षादृष्ट्या पश्यन्ती पृष्टवती– "किम् उक्तवान्? द्रोही नागवर्मा मम पितरं ज्वालाद्वीपे बन्धने स्थापितवान् इति! तथा अमरपालनामकेन उक्तं वा? कः सः अमरपालः?" इति।



"सः कपिलपुरीयः एव। नागवर्मणः सैन्यं प्रविष्टः सन् अस्माकं वशे आगतः। अनन्तरम् आत्मनः मूर्खतां ज्ञात्वा अस्माकं सहायकः अभवत्। आत्मना ज्ञातानि रहस्यानि उक्तवान् च। इदानीम् अस्मदर्थं कार्यं कुर्वन् विश्वासेन व्यवहरति" इति उक्तवान् चित्रसेनः।

"असत्यम् एतत्। अमरपालः असत्यम् उक्तवान्। मम पिता दुर्गे एव कुत्रापि भूगृहे निबद्धः अस्ति। मम पितरं सजीवम् अन्यत्र नेतुं न शक्नुवन्ति ते" इति उक्तवती कान्तिमती।

"राजकुमार्याः विश्वासपूर्णवचनेन ज्ञायते यत् वीरसिंहः दुर्गे एव अस्ति इति। एवं तर्हि तस्य रक्षणार्थम् इदानीम् एव प्रस्थातव्यम्" इति वदन् गमनत्वरां प्रदर्शितवान् उग्राक्षः।

"भोः जडमते! अनाहूतस्य प्रवेशः अनुचितः। भवतः साहाय्यम् अपेक्षितम् इति केन उक्तम्?" इति चित्रसेनः उग्राक्षं कोपेन पश्यन् उक्तवान्।

"साहाय्यम् आवश्यकम् इति अहं कान्तिमती प्रार्थयन्ती अस्मि। कृपया...." इति कान्तिमती यावत् उक्तवती तावता चित्रसेनः तस्याः वचनं खण्डयन् गम्भीरध्वनिना साभिमानम् उक्तवान्– "किञ्चित्कालतः पूर्वं भवत्याः व्यवहारः भिन्नः एव आसीत् किल? मां सामन्तापेक्षया हीनं दृष्टवती। अहं चिन्तयामि - भवती मम विषये सम्यक् न जानाति इति। एषः अरण्यप्रदेशः मम एव। समीपे एवं मदीयम् अपूर्वं भवनम् अस्ति। तत्रस्थं नगरम् एव मम राजधानी" इति।

तदा कान्तिमती मन्दहासं प्रकटयन्ती पृष्टवती– "इदमिदानीम् उग्राक्षराक्षसः उक्तवान् - एषः अरण्यप्रदेशः मम इति। भवान् इदानीं वदति 'मम' इति। एवं तर्हि कस्य एषः प्रदेशः?" इति।

चित्रसेनः उग्राक्षं कोपमिश्रितदृष्ट्या दृष्टवान्। इदानीम् उग्राक्षः द्वन्द्वे पतितः। सः झटिति किमपि वक्तुं न शक्तवान्।

क्षणकालानन्तरं मन्दस्वरेण सः उक्तवान्– "यद्यपि एषः अरण्यप्रदेशः मम आसीत्, किन्तु अहम् इदानीं चित्रसेनमहाराजस्य सेवकः। अतः एतस्य

अधिकारी सः एव। मम वचनं राक्षसाहङ्कारयुक्तम् आसीत्। तदर्थं क्षमां प्रार्थयामि" इति।

"एवं वा? इदानीं मम संशयः परिहृतः। पूर्वं भवतोः विषये मम अन्यथाभावः आसीत्। अज्ञानेन तथा व्यवहृतवती अहं क्षमार्हा। कपिलपुरराजस्य वीरसिंहस्य अद्वितीया पुत्री कान्तिमती दैवयोगात् भवद्भ्यां रक्षिता च अहम् 'इतोऽपि अग्रे अपि साहाय्यं करणीयम्' इति प्रार्थयामि। चित्रपुरमहाराजः चित्रसेनः भवान् मम प्रार्थनां निश्चयेन पुरस्करोति इति अहं विश्वसिमि। नागवर्मणा कारागारे स्थापितः मम पिता बन्धनात् विमोचनीयः। राजद्रोही कठोरं दण्डनीयः च इत्यपि मम निवेदनम्" इति कान्तिमती विनयेन गौरवभावेन च उक्तवती।

एतत् श्रुतवतः चित्रसेनस्य अन्तरङ्गं सन्तोषेण विकसितम् अभवत्। सः उग्राक्षं पश्यन्– "ज्ञातवान् किल उग्राक्ष, भवतः गर्वयुक्तानि वचनानि कथम् अपार्थजनकानि भवन्ति इति? इतःपरं वा पूर्वापरं विविच्य वदतु। भवतः गर्वः एव अनर्थकारी। भवान् मम सेवां कर्तुम् अङ्गीकृतवान् इति स्मरतु" इति आज्ञास्वरेण उक्तवान्।

"आम्, भवतः सेवकः एव अहम्। राक्षसः अहं मन्दबुद्धिः कदाचित् अजागरूकतया व्यवहरामि" इति वदन् उग्राक्षः कान्तिमतीं नमस्कृतवान्।




कान्तिमती मन्दहासं प्रकटीकृतवती। द्विगुणितोत्साहः चित्रसेनः अनुचरान् पश्यन्– "शिबिकारक्षकेषु व्याघ्रचर्मधारिषु कोऽपि पलायनं न कृतवान् इति भाति। इदानीम् अस्माभिः कपिलपुरं प्रति गन्तव्यम्। भवत्सु चत्वारः शिबिकाम् उन्नयन्तु" इति उक्त्वा कान्तिमतीं निवेदितवान्– "भवती शिबिकायाम् उपविशतु" इति।

कान्तिमती तत् निराकुर्वती– "अहम् इदानीं बन्धने नास्मि किल? क्षत्रियकुलोत्पन्ना अहम् अश्वम् आरुह्य एव आगन्तुम् इच्छामि" इति उक्तवती।

"युक्तं महाराज! एतस्याः अश्वारोहणम् एव उचितम्। इतःपूर्वं राजकुमारी दुष्टान्



व्याघ्रचर्मधारिणः यत् सधैर्य सम्मुखीकृतवती तत् अस्माभिः दृष्टम् एव'' इति उक्तवान् उग्राक्षः।

''इतःपरं राजकुमार्या एवं युद्धं करणीयं न भविष्यति। राजकुमारि! भवती अश्वम् आरुह्य सुखेन आगच्छतु। कपिलपुरं वशीकृत्य बीरसिंहं बन्धविमुक्तं कृत्वा भवत्या सह तस्य मेलनम् अहं कारयिष्यामि। एतत् मम कर्तव्यम्। एतस्मिन् प्रयत्ने युद्धकरणं मम, मत्सैनिकानां च कार्यम्। इदानीं गच्छाम तावत्'' इति उक्तवान् चित्रसेनः। सर्वे ततः प्रस्थिताः।

एकघण्टां यावत् प्रयाणानन्तरं ते कपिलपुरदुर्गस्य समीपं गतवन्तः। दुर्गस्य उपरि दुर्गरक्षणार्थं समूहरूपेण स्थिताः शत्रुसैनिकाः दूरतः एव दृश्यन्ते स्म। दुर्गरक्षणे निरतौ आकाशे डयमानौ उभौ पक्षिणौ अपि चित्रसेनादिभिः दृष्टौ।

तौ भयङ्करपक्षिणौ दृष्ट्वा चित्रसेनः उग्राक्षः च दिग्भ्रान्तौ। उग्राक्षः चित्रसेनसमीपम् आगत्य– ''महाराज! अत्रापि दुष्टपक्षिणु उभौ स्तः। ससैन्यम् अग्रे आगतस्य अमरपालस्य आयुः समाप्तम् इति भाति। ते सर्वे प्रायः एतैः मारिताः स्युः। एतत् तु न कल्पितम् आसीत् अपि'' इति उक्तवान्।

अमरपालस्य जीवितविषये चित्रसेनस्य अपि सन्देहः एव। सः दुर्गस्य द्वारं परीक्षादृष्ट्या दृष्टवान्। द्वारं तु सुदृढं पिहितम् आसीत्। सैनिकानां मरणचिह्नं तत्र कुत्रापि न दृश्यते स्म। 'दुर्गस्य वशीकरणम् दुस्साध्यम् इति चिन्तयित्वा अमरपालः समीपे कुत्रापि निलीय स्थितवान् स्यात्' इति आलोचितवान् चित्रसेनः।

वस्तुतः चित्रसेनस्य आलोचनं युक्तम् एव आसीत्। तत्समये समीपे एव वृक्षाणां मध्ये कश्चन मन्दः कोलाहलः श्रुतः। अनन्तरक्षणे अमरपालः अश्वम् आरुह्य वेगेन आगत्य कातरस्वरेण उक्तवान्– ''महाराज! नागवर्मा ससैन्यम् इतः गमनसमये दुर्गरक्षणविषये सम्यक् चिन्तितवान् एव। केचन सैनिकाः, तौ पक्षिणौ च जागरूकतया कार्यनिरताः सन्ति। बहुकालतः अहं सूक्ष्मं परिशीलयन् अस्मि -

दुर्गे पक्षिणौ उभौ केवलं स्तः, सैनिकाः अपि केचन एव। कैश्चित् एव सैनिकैः सह मम आक्रमणम् अनुचितम् इति चिन्तयित्वा तूष्णीं स्थितवान्। भवतां निरीक्षणे आसम्'' इति।

''युक्तं निर्णयं स्वीकृतवान्। अल्पसङ्ख्याकाः भवन्तः यदि दुःसासहं कृतवन्तः स्युः तर्हि सर्वनाशः अभविष्यत्। भवतः दूरदर्शिता सहना च प्रशंसार्हा। भवतां विषये एव अस्माकं चिन्ता आसीत्'' इति उक्तवान् चित्रसेनः।

अनन्तरं सः उग्राक्षं पश्यन्– ''उग्राक्ष! इदानीं दुर्गद्वारस्य भञ्जनं विना न अन्या गतिः। एतत्कार्यार्थं शिलागदाधारिणः भवतः अनुचराः एव अर्हाः'' इति उक्तवान्।

उग्राक्षः तु चित्रसेनम् एकवारं पश्यति। पुनश्च आकाशे डयमानौ भयङ्करपक्षिणौ पश्यति।

उग्राक्षस्य मनोभावं ज्ञात्वा चित्रसेनः उक्तवान्– ''उग्राक्ष! भवान् राक्षसकुले जातः इति मा विस्मरतु। न्यायनिष्ठः भवान् मदीयं नायकत्वम् अङ्गीकृतवान्। अन्यथा अल्पबलशालिनः वयं क्षणमात्रेण भवताम् आहाराः अभविष्याम। एतादृशं भवतां बलं परिशील्य एव अहं तथा उक्तवान्'' इति।

''बलम् अस्ति इति तु सत्यम् एव। निमेषमात्रेण मम अनुचराः द्वारं भञ्जयेयुः। यदि आवश्यकं तर्हि क्षणमात्रेण ते दुर्गम् अपि नाशयेयुः। किन्तु तयोः भयङ्करपक्षिणोः विषये एव....'' इति वदन् उग्राक्षः भीतिं प्रकटयन् भूमिम् आकाशं च दृष्टवान्।

''पक्षिणोः विषये भीतिः मास्तु। तौ यथा आक्रमणं न कुरुतः तथा व्यवस्थाम् अहं करोमि'' इति उक्तवान् अमरपालः।

''तत् कथं शक्यते?'' इत आश्चर्येण पृष्टवान् चित्रसेनः।

''अद्य प्रातः यदा गोष्ठं ज्वालितं तदा मया दृष्टं यत् ते पक्षिणः अग्नितः बहु भीताः भवन्ति इति। अस्माकं सैनिकेषु केचन दीपशिखां गृहीत्वा तिष्ठन्तु। तदा पक्षिवाहकैः तीव्रं प्रेर्यमाणौ अपि तौ पक्षिणौ प्रखरज्वालातः भीतौ अस्माकं समीपं न आगच्छतः'' इति। (अनुवर्तते)






# दुराग्रहः

**म**हाराजः चेदपि कथाश्रवणे बालः इव व्यवहरन् इव त्रिविक्रमः पुनः अपि वृक्षस्य समीपं गतवान्। शाखायां लम्बमानं शवं स्कन्धे आरोप्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "राजन्! यावत् वा कष्टं भवतु, कार्यं साधनीयम् एव इति चिन्तयतः भवतः श्रद्धा प्रशंसार्हा एव। किन्तु एतस्मिन् कार्ये भवन्तं यः प्रेरितवान्, सः किं कार्यस्य साध्यासाध्यतायाः विवेचनं कृतवान्? तस्य लोकपरिज्ञानं भवान् जानाति? उत किमपि अविचिन्त्य सामर्थ्यबाह्यं कार्यं निर्वहति? प्रसन्न-ज्ञानेन्द्रनामकयोः पितापुत्रयोः कथां शृण्वतां मनसि पूर्वोक्तः एव संशयः उद्भवति। तयोः कथां श्रावयामि। मार्गायासः यथा न ज्ञायेत तथा श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं धरणिगिरिनामके ग्रामे प्रसन्नः नाम

## वेतालकथा



धनिकः कृषिकः आसीत्। तस्य पुत्रद्वयम्। ज्येष्ठः जितेन्द्रः, अन्यः ज्ञानेन्द्रः।

जितेन्द्रः यत् चिन्तयति तत् निश्चिन्ततया सावधानं च चिन्तयति। यत् किमपि कार्यं भवतु, सः उचितं विचिन्त्य करोति। ज्ञानेन्द्रस्य स्वभावः एतद्विरुद्धः। सर्वदा सः किमपि अविचिन्त्य एव कार्यं करोति।

प्रसन्नः स्वयं कृषिं न करोति। तेन भूमिः कृषकेभ्यः दत्ता आसीत्। प्रतिफलरूपेण ते प्रतिवर्षं धान्यं धनं वा यच्छन्ति स्म। एवं स्थिते अपि प्रसन्नः प्रतिदिनं क्षेत्रं गत्वा कृषिकार्यं पश्यति।

'कृषिकेभ्यः दत्ता इति विचिन्त्य अश्रद्धा प्रदर्शिता चेत् भूदेवी कुपिता भवति' इति प्रसन्नस्य अभिप्रायः।

जितेन्द्रः प्रतिदिनं पित्रा सह कृषिक्षेत्रं गच्छति। नूतनपद्धत्याः आधारेण कृषौ परिवर्तनं कथम् आनेतव्यम् इति सः कृषिकैः सह चर्चां करोति। कृषिविषये तदीयं ज्ञानं सर्वे प्रशंसन्ति स्म। तस्य विचारम् अङ्गीकुर्वन्ति स्म। अतः तस्य विषये ग्रामे सदभिप्रायः आसीत्।

अनुजस्य ज्ञानेन्द्रस्य तु कृषिविषये बाल्यतः आरभ्य निरासक्तिः। लघुकार्यार्थम् अपि द्वित्रवारं सूचनीयं भवति स्म। अन्ते सः कथञ्चित् तत्कार्यं समापयति। अश्रद्धया कृतं कार्यं निष्प्रयोजकं भवति स्म।

ज्ञानेन्द्रस्य दैनन्दिनं कार्यं तु— निरुद्योगिभिः स्नेहितैः सह मिलित्वा राक्षसमायातः राजशासनपर्यन्तं सर्वं जानामि इति विकत्थनम्। अतः ग्रामीणाः, पिता च तं तदा तदा निन्दन्ति स्म — 'भवान् सर्वथा अप्रयोजकः भविष्यति' इति। पिता प्रसन्नः तु जितेन्द्रम् उदाहरणत्वेन प्रदर्शयन् बहुवारं हितवचनानि बोधितवान्। तर्जनपूर्वकं बोधितवान्। किन्तु केनापि प्रयत्नेन ज्ञानेन्द्रस्य प्रवृत्तौ परिवर्तनं न आगतम्।

ज्ञानेन्द्रस्य मनसि अपि तदा तदा व्यथा बाधते स्म— 'अहं व्यर्थं कालयापनं कुर्वन् अस्मि' इति। किन्तु कृषिकार्ये तस्य सर्वथा इच्छा नास्ति। 'किं कार्यं करोमि चेत् अहं

कालान्तरे प्रगतिं प्राप्नुयाम्' इति सः सर्वदा चिन्तयति।

एवम् एव कानिचन दिनानि अतीतानि। एकदा ज्ञानेन्द्रः पितरम् उक्तवान्– "तात! मम प्रवृत्त्यनुगुणं किमपि कार्यं करणीयम् इति बहोः कालतः चिन्तयन् अस्मि। कस्मिंश्चित् वाणिज्ये अहं प्रगतिं साधयेयम् इति भाति। एतदर्थं राजधानी एव योग्यं स्थलम्" इति।

पुत्रस्य वचनेन आश्चर्यम् अनुभवन् प्रसन्नः पृष्टवान्– "वाणिज्यं करणीयं चेत् मूलधनम् आवश्यकं किल? तदर्थं किं करोति? यथा अहं न जानीयां तथा रहसि किमपि सम्पाद्य स्थापितवान् वा भवान्?" इति।

"तथा नास्ति। मूलधनरूपेण भवान् साहाय्यं करोति इति मम विश्वासः" इति उक्तवान् ज्ञानेन्द्रः।

"एतावत्पर्यन्तम् व्यर्थं कालहरणं कृतवते भवते केन विश्वासेन धनं दद्याम् अहम्?" इति पुनः पृष्टवान् प्रसन्नः।

"पित्रार्जितसम्पत्तौ कालान्तरे वा मह्यम् अर्धभागः दातव्यः एव। तम् एव भागम् इदानीं दातुम् अर्हति भवान्" इति असमाधानमिश्रितेन स्वरेण उक्तवान् ज्ञानेन्द्रः।

तदा प्रसन्नः अपि कोपावेशेन– "परम्पराप्राप्तां भूदेवीं परित्यज्य नगरे वाणिज्यं कर्तुम् इच्छति वा भवान्? प्रगतिसाधनेच्छया उक्तं वचनं न एतत्। नगरस्य आडम्बरेण आकृष्टः भवान्। अतः





वाणिज्यव्याजेन तत्र गत्वा अपव्ययं कर्तुम् इच्छति। यावत् मम शरीरे प्राणाः तिष्ठन्ति तावत् भवतः विचारः न फलति'' इति गर्जितवान्।

पितुः कोपं विशेषतः अपरिगणयन् ज्ञानेन्द्रः दृढस्वरेण पितरम् उक्तवान्– ''दुर्व्यसनानां दासः सन् अहं धनं न पृष्टवान्। वाणिज्यं करणीयम् इति मम दृढः निश्चयः। यदि इच्छति साहाय्यं करोतु। अथवा मदीयं भागं मह्यम् अर्पयतु। व्यर्थः वादविवादः किमर्थम्?'' इति।

एवं पितापुत्रयोः मध्ये बहुकालपर्यन्तं वादविवादः प्रवृत्तः। अन्ते एषा समस्या ग्रामप्रमुखयोः सम्मुखं नीता। तयोः पुरतः पुनः अपि वादविवादः जातः।

अन्ते ग्रामप्रमुखौ एवं निर्णयं दत्तवन्तौ– ''प्रसन्नः ज्ञानेन्द्राय किञ्चित् धनं ददाति। तेन ज्ञानेन्द्रः वाणिज्यस्य आरम्भं करोति। एकवर्षाभ्यन्तरे तेन वाणिज्ये लाभः प्रदर्शनीयः। यदि लाभः प्रदर्श्यते तर्हि प्रसन्नः अग्रे अपि वाणिज्यार्थम् अनुमतिं ददाति। पुनः अपि धनसाहाय्यं करोति च। किन्तु वाणिज्ये हानिः यदि भवेत् तर्हि ज्ञानेन्द्रः जितेन्द्रेण सह कृषिकार्ये साहाय्यं कुर्यात्'' इति।

एतं निर्णयं ज्ञानेन्द्रः अङ्गीकृतवान्। प्रसन्नः अनिच्छन् एव ज्ञानेन्द्राय धनं दत्तवान्।

राजधानीं गन्तुम् उद्युक्तः ज्ञानेन्द्रः मातापितरौ श्रद्धया नमस्कृत्य आशीर्वादं प्रार्थितवान्।

माता अश्रूणि स्रावयन्ती आशिषा अनुगृहीतवती। प्रसन्नः तु– ''गच्छतु सुखेन। यदि भवान् साफल्यं प्राप्नुयात् तर्हि एव मम आशीर्वादः'' इति कटुतया उक्तवान्।

ज्ञानेन्द्रः राजधानीं गतवान्। अनन्तरं षण्मासाभ्यन्तरे एव वाणिज्ये हानिम् अनुभूय दुर्व्यसनानां दासः सन् रिक्तहस्तेन गृहं गतवान्।

माता दुर्बलं पुत्रं दृष्ट्वा सङ्कटम् अनुभूतवती। पिता तु कोपेन– ''या च भक्त्या सेवनीया आसीत् तां भूदेवीं

परित्यज्य मृगमरीचिकाम् अनुसृतवान् किल? तस्य फलम् एतत्। इदानीं वा विवेकः उदितः स्यात् किल?" इति निन्दनं कृत्वा उत्तमवैद्येन औषधोपचारं कारितवान्।

केषाञ्चित् दिनानाम् अनन्तरं ज्ञानेन्द्रः स्वस्थः जातः। तदा प्रसन्नः तम् उक्तवान्– "इतःपरं भवतः वाणिज्यं मास्तु। श्वः आरभ्य जितेन्द्रेण सह कृषिक्षेत्रं गच्छतु। सः भवन्तं कृषितन्त्राणि पाठयति। श्रद्धया कृषिं करोतु" इति।

ज्ञानेन्द्रः प्रत्युत्तरं किमपि दातुम् असमर्थः सन् अनिच्छन् अपि कृषिकार्ये लग्नः अभवत्।

एवं वेतालः कथां समाप्य अवदत्– "राजन्, पितापुत्रयोः अस्मिन् कलहे कः विवेकपूर्णं व्यवहारं प्रदर्शितवान्? तयोः कलहकारणं धननाशस्य च कारणम् उभौ अपि? अथवा कश्चित् एकः? एतस्य सन्देहस्य उत्तरं जानन् अपि यदि न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा त्रिविक्रमः एवम् उक्तवान्– "अत्र समग्रः दोषः प्रसन्नस्य एव। ज्ञानेन्द्रः स्वाभावतः न दुष्टः। बुद्धिमान् अपि। एतादृशस्य पुत्रस्य इष्टानिष्टतां ज्ञात्वा तदनुगुणं परिसरकल्पनं पितुः दायित्वम्। 'मया या कृषिः आश्रिता सा एव पुत्रेण अपि आश्रयणीयाः' इति कथनं तु दुराग्रहः एव। अनिच्छतः उपरि स्वाभिप्रायस्य आरोपणं व्यक्तित्वनाशाय भवति। वाणिज्ये ज्ञानेन्द्रस्य इच्छा अस्ति इति ज्ञातवान् प्रसन्नः। अनुभविनः वणिजः मार्गदर्शने पुत्रः नियोजनीयः आसीत् तेन। किन्तु तथा न कृतवान्। अनुभवशून्यः ज्ञानेन्द्रः नागरिकप्रपञ्चे समयसाधकैः वञ्चितः अभवत्। अन्ते च तेन इच्छाविरुद्धा वृत्तिः आश्रयणीया आपतिता'। अस्य सर्वस्य अपि कारणं प्रसन्नस्य दुराग्रहः एव। मुग्धः ज्ञानेन्द्रः तु अत्र निर्दोषी" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा पुनः अपि वृक्षस्य शाखाम् अवलम्बितवान्।





# क्षीरस्य रुचिः

पूर्वं सुवर्णवर्मा नाम राजा धवलपुरराज्य पालयन् आसीत्। कदाचित् 'महात्मा सूर्यदेवनामकः ऋषिः अरण्ये तपः कुर्वन् अस्ति' इति विषयं सः राजा सुवर्णवर्मा ज्ञातवान्। सः ऋषिः महान् तपस्वी, महाज्ञानी इति ज्ञात्वा 'तस्य समीपं गत्वा तेन सह न्यूनातिन्यूनम् एकं दिनं वा स्थित्वा आगन्तव्यम्' इति चिन्तितवान् राजा। एतदर्थम् अनुमतिं प्राप्तुं पूर्वम् एव मन्त्रिणं ऋषेः समीपं प्रेषितवान् च।

सूर्यदेवऋषिः मन्त्रिणः वचनं श्रुत्वा उक्तवान्– "भवतः राजा न्यायशीलः इति श्रुतवान्। इदानीं सः मम आश्रमम् आगत्य मया सह एकं दिनं यापयितुम् इच्छति इति चेत् प्रायशः तस्य धर्मजिज्ञासा स्यात्। नो चेत् तादृशसुखप्रदानि हंसतूलिकातल्पानि राजभवनं च त्यक्त्वा मया सह कथं पर्णकुटीरे वासं कुर्यात्? महान् सन्तोषः। मया सादरम् आह्वानं कृतम् इति वदतु" इति।

सूर्यदेवऋषेः वचनं श्रुत्वा मन्त्री अतीव सन्तुष्टः। तावति काले आश्रमवासी कश्चन एकचषकं क्षीरम् आनीय मन्त्रिणे दत्तवान्। मन्त्री क्षीरं पीतवान्। क्षीरस्य रुचिः असाधारणी आसीत्।

मन्त्री आश्रमवासिनम् उक्तवान्– "क्षीरस्य एतादृशी रुचिः इतः पूर्वं कदापि मया न आस्वादिता आसीत्। प्रायः उत्तमायाः गोः क्षीरं स्यात्। सत्यं किल?" इति।

"एतत् अस्माकम् आश्रमस्य गोः क्षीरम् एव। एषा गौः अस्माकं गुरोः अतीव प्रियतमा अस्ति" इति उक्तवान् आश्रमवासी।

मन्त्री पुनः किञ्चित्कालम् आश्रमे स्थित्वा ततः राजभवनं प्रति गतवान्। अनन्तरदिने मन्त्री राजा सुवर्णवर्मा च सूर्यदेवऋषेः आश्रमं गतवन्तौ। ऋषिः

महाराजाय आशीर्वचनम् उक्त्वा उपवेष्टुम् एकं दर्भासनं प्रदर्शितवान्, शिष्यम् आहूय उक्तवान् च– "महाराजाय मन्त्रिणे च क्षीरम् आनीय ददातु" इति।

शिष्यः क्षीरम् आनेतुम् अन्तः प्रस्थितः। तदा मन्त्री रहस्येन तं सूचितवान्– "महाराजाय क्षीरं दातव्यम् इति चेत् भवतः गुरोः अभिमानयुक्तायाः गोः क्षीरम् एव आनयतु। ज्ञातं वा?" इति।

"तत् एव क्षीरम् आनयामि। गुरुः अपि अतिथिभ्यः एतत् एव क्षीरम् आनेतुं वदति" इति उक्तवान् शिष्यः।

शिष्यः किञ्चित्कालानन्तरं चषकद्वये क्षीरम् आनीय एकचषकं महाराजाय अपरं चषकं मन्त्रिणे च दत्तवान्, मन्त्रिणम् उक्तवान् च– "भवता सूचितम् एव क्षीरम् एतत्" इति।

मन्त्री क्षीरं किञ्चित् पीत्वा मुखं सङ्कोचीकुर्वन् शिष्यं पार्श्वे नीत्वा पृष्टवान्– "निश्चयेन एतत् क्षीरं तस्याः गोः एव वा? अथवा कुत्रापि प्रमादः आचरितः वा?" इति।

"प्रमादः न आचरितः। तस्याः गोः क्षीरम् एव चषकद्वये आनीय एकं महाराजाय अपरं भवते च दत्तवान्" इति उक्तवान् शिष्यः।

राजा एतं विषयं न लक्षितवान् एव। सः चषकस्थं क्षीरं किञ्चित् किञ्चित् पिबन्, सूर्यदेवऋषिणा उच्यमानान् धार्मिकविषयान् मनःपूर्वकं शृण्वन् तस्मिन् एव लीनः आसीत्।

किञ्चित्कालानन्तरं ऋषिः उत्थाय



किमपि कार्यनिमित्तम् अन्तः गतवान्।

तदा मन्त्री महाराजं पृष्टवान्– "क्षीरस्य रुचिः कथम् अस्ति?" इति।

"रुचिकरम्! अत्यद्भुतम्! कीदृशः गन्धः!" इति सन्तोषातिरेकेण उद्गारं प्रकटितवान् राजा।

महाराजस्य वचनं श्रुत्वा मन्त्री नीरसतया उक्तवान्– "प्रभो, भवता यथा उक्तम्, तथैव मया अपि ह्यः अनुभूतम्। क्षीरस्य रुचिः अद्भुता एव आसीत्। अतः एव ऋषिसकाशात् तां गां क्रीणामि इति चिन्तितवान् आसम्। तदर्थं सः यावदपि धनं पृच्छतु, अहं दातुं सिद्धः आसम्। किन्तु आश्चर्यं नाम – अद्य दत्तस्य क्षीरस्य रुचिः सामान्या एव अस्ति" इति।

तत् श्रुत्वा सुवर्णवर्मा क्षणकालं मौनं स्थितवान्। अनन्तरं शान्तस्वरेण उक्तवान् च– "मन्त्रिन्, क्षीरस्य रुचिः असाधारणी इति भवान् ह्यः दृष्टवान्। तस्य कारणम् एतावदेव। ह्यः ऋषिविषये भवतः गौरवपूर्वकं कृतज्ञताभावना आसीत्। किन्तु क्षीरपानानन्तरं एव भवतः स्वार्थभावना उत्पन्ना। तेन स्वार्थगुणेन ऋषेः दयाशीलतां विस्मृतवान् भवान्। क्षीरस्य मूल्यं धनरूपेण गणितवान्। एवं सति अद्य क्षीरस्य रुचिः अमृतसमाना भवितुं कथं शक्यम्? अमूल्यस्य वस्तुनः मूल्यं चिन्तयामः चेत् एवमेव भवति" इति।

मन्त्री लज्जया शिरः अवनमितवान्। तदा राजा सगम्भीरम् उक्तवान्– "ऋषिसामीप्यम् इच्छन् एकं दिनं प्रशान्ततया यापयितुम् एतं पर्णकुटीरम् आगतवान् अहम्। क्षीरफलादीनां लाभं, नष्टं चिन्तयितुं वा गणयितुं वा न आगतवान्। माम् एकाकिनम् अत्र त्यक्त्वा भवान् राजधानीं गच्छतु" इति।

मन्त्री उत्थाय किमपि अनुक्त्वा शिरः अवनमय्य कुटीरात् बहिः आगत्य ततः राजधानीं गतवान्। किञ्चित्कालानन्तरं स्मयमानः प्रशान्तवदनः सूर्यदेवऋषिः महाराजस्य समीपम् आगतवान्।






अस्माकं देवालयाः

# कामाक्षीमन्दिरम्

पिशाचनिवारणसन्दर्भे मान्त्रिकाणां वचनेषु वयं शृणुमः– "जगदाम्बायाः कामाक्ष्याः नाम्ना आज्ञापयामि - मम वचनानुगुणम् आचरत" इति। एषा सा एव कामाक्षी या च आस्सामराज्ये गौहातीनगरसमीपे नीलपर्वते विराजते। एषा भक्तान् अनुगृह्णाति इति बहूनां विश्वासः।

दक्षयज्ञसमाप्त्यनन्तरं शिवः सतीदेव्याः भौतिकं शरीरम् उन्नीय प्रपञ्चे सर्वत्र अटितवान्। तस्मिन् समये अस्मिन् पर्वते सतीदेव्याः शरीरस्य कश्चन भागः पतितः। तस्य उपरि एव एतत् मन्दिरं निर्मितम् इति भक्ताः विश्वसन्ति। तस्मिन् काले एतत् मन्दिरं भीकरारण्यस्य मध्ये आसीत्। अतः सामान्याः कष्टेन तत्र गच्छन्ति स्म।





षोडशतमे शतके कालासहारु सैनिकाः तं देवालयं नाशितवन्तः। ते सैनिकाः अकस्मात् देवालयस्य उपरि आक्रमणं कृतवन्तः। अतः तस्य प्रान्तस्य राजानः तं देवालयं रक्षितुं न शक्तवन्तः। अनन्तरम् अनेकवर्षपर्यन्तं तत्र एकाकी पूजकः केवलं निवसति स्म।




अनन्तरकाले मल्लदेवः नाम अस्सामराजः बङ्गालीयस्य मोगलशासकस्य उपरि आक्रमणं कृतवान्। तस्मिन् युद्धे पराजितः सन् सः मोगलशासकेन कारागारे स्थापितः।

एकस्मिन् दिने मल्लदेवः गाढनिद्रायाम् एकं स्वप्नं दृष्टवान्। तस्मिन् स्वप्ने देवी प्रत्यक्षीभूय उक्तवती– "राजन्, भवतः राज्यसीमायाः अन्तः एव भवतः राज्यदेवतायाः आलयः जीर्णः अस्ति। तस्य समीकरणं कारणीयम् आसीत् भवता। तत् विहाय भवान् पार्श्वराजस्य उपरि आक्रमणं कृत्वा पराजितः। लज्जा न भवति वा भवतः?" इति।





राजा निद्रातः उत्थाय स्वकीयं दोषं ज्ञातवान्। बन्धनतः कथं विमोचनम् इति उपायम् अपि देवी एव स्वप्ने सूचितवती। प्रातःकालसमये मोगलशासकस्य माता उद्याने विहरन्ती आसीत्। तदा सर्पेण दष्टा स्मृतिहीना सा पतितवती।

अनेके वैद्याः आगत्य तां रक्षितुं बहुधा प्रयत्नं कृतवन्तः। किन्तु सा न उत्थिता एव। मातुः विषये अतीव अभिमानः आसीत् मोगलशासकस्य। अतः मातुः परिस्थितिं दृष्ट्वा सः अतीव दुःखितः।





इतःपरं वैद्याः किमपि कर्तुं न शक्नुवन्ति इति यदा सः ज्ञातवान् तदा "मम मातुः प्राणान् यः रक्षति सः यत् इच्छति तत् दास्यामि" इति सभायाम् उद्घोषितवान्। तथापि सभासत्सु कोऽपि अग्रे न आगतः।

कारागृहे बद्धः मल्लदेवराजः रक्षकभटान् उक्तवान्– "यदि अहं कारागृहतः मुक्तः भवामि, तर्हि महाराजस्य मातुः प्राणान् रक्षितुं शक्नोमि इति वदन्तु" इति। मोगलशासकः एतत् अङ्गीकृत्य मल्लदेवस्य विमोचनं कारयित्वा आनायितवान्।





मल्लदेवराजः स्वप्ने कामाक्षीदेव्या उपदिष्टं मन्त्रम् उच्चरितवान्। अपरक्षणे एव मोगलशासकस्य माता उत्थितवती। मोगलशासकः महता सन्तोषेण मल्लदेवराजं दृढम् आलिङ्गितवान्। अमूल्यैः उपायनैः गौरवपूर्वकं सत्कृत्य तं प्रेषितवान् च।

मल्लदेवः स्वराजधानीं गतवान्। शीघ्रातिशीघ्रमेव नवनीतेन दग्धाभिः इष्टिकाभिः कामाक्षीदेव्याः आलयस्य पुनर्निर्माणम् आरब्धवान्। शीघ्रम् एव तत् कार्यं समाप्तम्। सः आजीवितं देव्याः भक्तः जातः। देव्याः आलयस्य पूजादिकार्यनिमित्तं योग्यव्यवस्थां कृतवान् च।






तदारभ्य भक्ताः आलयम् आगन्तुम् आरब्धवन्तः। एतस्य देवालयस्य गर्भगृहे कृष्णवर्णीया एका शिला देव्याः विग्रहप्रतीकम् इव अस्ति। आलयस्य प्राकारः सर्वदा कान्त्या शोभते।



# व्यर्थशासनम्

पूर्वं शान्तसेनः नाम राजा लवङ्गपुरराज्यं पालयति स्म। साधु-संन्यासिनां विषये अतीव गौरवं प्रदर्शयति स्म महाराजः।

तादृशाः साधु-संन्यासिनः सर्वेऽपि भगवतः प्रतिरूपाणि, तैः बोध्यमानानि वाक्यानि वेदवाक्यानि इति महाराजः विश्वसिति। स्वकीयराज्यस्य प्रजाभिः वा उद्योगस्थैः वा कथञ्चित् अपि ते संन्यासिनः न पीडनीयाः, गौरवादरैः एव द्रष्टव्याः इति राजा शासनम् एव कृतवान् आसीत्। अपि च राज्ये साधु-संन्यासिनां कृते निःशुल्कं भोजन-वसत्यादीनां व्यवस्था कृता आसीत्। यदि यः कश्चित्, साधु-संन्यासिनाम् अवमाननं करोति, तर्हि तेन कठिनदण्डनम् अनुभोक्तव्यम् आसीत् तस्मिन् काले।

एवं स्थिते कदाचित् मन्त्री माधवशर्मा महाराजम् उक्तवान्– "प्रभो, भवान् साधु-संन्यासिनां कृते एवं शासनं कृतवान्। किन्तु इदानीं तेषां व्यवस्थार्थम् एव अस्माकम् आयस्य अर्धभागः व्ययितः भवति। तेन कारणेन प्रजानां क्षेमाभिवृद्धिः अपि कुण्ठिता अस्ति। अन्यः एकः प्रधानः विषयः नाम– यदा एतत् शासनं व्यवहारे आनीतं, तदारभ्य पूर्वापेक्षया अपराधिनां सङ्ख्या अधिका जाता। एतेषु दिनेषु न्यायालयस्य विरामः एव न भवति" इति।

तत् अनिच्छन् इव शिरः चालयन् शान्तसेनराजः उक्तवान्– "तथा न वदतु। मया कृतं साधु-संरक्षणाशासनम् एव अस्याः परिस्थित्याः कारणम् इति यदि भवान् विश्वसिति, तर्हि भगवतः प्रतिरूपाणां साधु-संन्यासिनाम् अवमाननम् एव। एतेषां सेवया अस्माकं राज्यम् उन्नतस्तरं प्राप्स्यति इति मम दृढः विश्वासः अस्ति। तेषां विषये अन्यथा न चिन्तयतु भवान्" इति।

मन्त्री क्षणकालं मौनं स्थित्वा



उक्तवान्– "प्रभो, विद्यमानायाः परिस्थित्याः निवेदनं मम कर्तव्यम् इति चिन्तयन् मया यत् ज्ञातं तत् उक्तवान् अहम्। साधु-संन्यासिनां विषये अगौरवं प्रदर्शितवान् इति न चिन्तयतु" इति।

एतस्य अङ्गीकरणपूर्वकं राजा उक्तवान्– "अस्माकं राजगुरुः एकवर्षतः देशाटनं कुर्वन् अस्ति। शासनकरणात् पूर्वम् अनुभविनां मार्गदर्शनं प्राप्तुं मम अवकाशः न आसीत्। एतद्विषये मम विश्वासः एव साक्षी। अस्तु, इदानीं एकं कार्यं करोतु। 'सर्वाः प्रजाः अपि विशेषतया परिश्रमेण कार्यं कुर्युः। सकाले विना क्लेशं करादीन् दद्युः च। अकस्मात् यः कोऽपि अलसः भवति, तेन कठिनं दण्डनम् अनुभोक्तव्यं भवति' इति उद्घोषणं करोतु। अस्याः आज्ञायाः साफल्यं यदि भवति, तर्हि पुनः अपि अस्माकं कोशागारः यथेष्टं पूरितं भवति। एतद्विषये भवतः खेदः मास्तु" इति।

मन्त्री माधवशर्मा महाराजस्य आदेशानुसारं देशे सर्वत्र उद्घोषणं कृतवान्। एवमेव कानिचन दिनानि अतीतानि। शान्तसेनराजः मन्त्रिणं माधवशर्माणम् आहूय पृष्टवान्– "इदानीम् अस्माकं कोशागारस्य परिस्थितिः कथम् अस्ति? मम आज्ञा समीचीनतया पाल्यते वा?" इति।

"प्रभो, किमिति वदामि? कोशागारस्य परिस्थितिः इदानीम् अतीव गम्भीरा अस्ति। कारणं किम् इति सम्यक् न ज्ञायते। प्रजानां पीडनम् अपि दुःशकम्। तादृशी परिस्थितिः" इति उक्तवान् मन्त्री।

एतत् श्रुत्वा आश्चर्यचकितः राजा उक्तवान्– "किम् उक्तम्? प्रजाः मम आज्ञां शिरसा न अङ्गीकुर्वन्ति वा? श्रद्धां न प्रदर्शयन्ति वा? किमर्थम् एवं भवति इति अस्माभिः ज्ञातव्यम्। वृथा प्रजानां पीडा न उचिता। स्वयं गत्वा पश्यामः चेत् ज्ञायेत। अद्य वेषान्तरेण देशसञ्चारं कृत्वा आगच्छाम। भवान् अपि आगच्छतु" इति।

एवं राजा मन्त्री च वेषान्तरेण कस्मिंश्चित् लघुनगरे अटन्तौ आस्ताम्। तस्मिन् समये कस्यचित् तन्तुवायस्य गृहे केचन वेमां परितः उपविश्य सन्तोषेण

सम्भाषणं कुर्वन्तः आसन्। राजा मन्त्री च एतत् दृष्टवन्तौ।

तौ तेषां समीपं गत्वा पृष्टवन्तौ– "भवन्तः स्वकार्याणि त्यक्त्वा अलसाः इव कालयापनं कुर्वन्ति चेत् एतस्य देशस्य राजा कठिनरीत्या दण्डयति इति एषा वार्ता भवद्भिः न श्रुता वा?" इति

एतयोः वचनं श्रुत्वा वेमां परितः उपविष्टाः उच्चैः हसन्तः उक्तवन्तः– "भवन्तौ नूतनतया अत्र आगतवन्तौ इति मन्यामहे" इति। भित्तौ विद्यमानं दण्डकमण्डलुकाषायवस्त्रादीन् प्रदर्शयन्तः पुनः उक्तवन्तः– "राजशासनं विरुध्य वयं व्यवहरामः इति यः कश्चित् अस्मान् दण्डयितुम् उद्युक्तः भवति, तर्हि अपरक्षणे एव वेषान्तरेण साधु-संन्यासिनां रूपं प्राप्नुमः। यद्यपि अस्मिन् देशे अलसेभ्यः एव दण्डनम् इति शासनम् अस्ति, तत् सत्यम् एव। तथापि तत् साधु-संन्यासिभ्यः न अन्वेति। अपि च वयं यं कमपि अपराधं कुर्मः चेत् अपि यदि वेषान्तरेण साधुसज्जनाः भवामः, तर्हि भयम् एव नास्ति। दूरतः एव राजभटान् दृष्ट्वा ज्ञातुं शक्नुमः वयम्" इति।

"एवं वा विषयः?" इति चिन्तयन्तौ शान्तसेनराजः मन्त्री च ततः प्रस्थितौ। पुनरपि बहुषु प्रान्तेषु अटितवन्तौ। सर्वेषु स्थलेषु अपि समानम् अनुभवम् एव प्राप्तवन्तौ।

ततः तौ द्वौ अपि राजधानीं प्रत्यागतवन्तौ। प्रजानां हितार्थम् इति स्वेन यत् शासनं कृतम् आसीत् तत् किमर्थं व्यर्थं



जातम् इति ज्ञातुम् अशक्तः राजा अतीव व्यथितः।

एवं सति राजगुरुः देशाटनं समाप्य प्रत्यागतवान् अस्ति इति विषयं शान्तसेनराजः ज्ञातवान्। तत्क्षणे एव राजा मन्त्रिणा सह राजगरोः दर्शनार्थं प्रस्थितः।

शान्तसेनराजस्य वचनं श्रुत्वा राजगुरुः उक्तवान्– "राजन्, अस्माकं उद्देशः आदर्शभूतः भवेत्। इष्टानिष्टम् अविचार्य एव यानि शासनानि क्रियन्ते, तानि प्रजानां विषये महाराजस्य विषये च शापरूपेण परिणमन्ति। लोकहितनिरताः सर्वसङ्गत्यागिनः महानुभावाः अङ्गुलिगणनीयाः" इति।

"गुरुदेव, प्रतिदिनम् अपि अनेकान् सज्जनान् साधु-संन्यासिनः पश्यामः किल? अङ्गुलिगणनापेक्षया अधिकाः सन्ति इति भाति" इति उक्तवान् शान्तसेनराजः।

राजगुरुः मन्दं हसन् उक्तवान्– "तादृशेषु निष्कपटिनां संन्यासिनां परिचयः न सुलभः राजन्। तत्रापि अनेके संसारदायित्वं निर्वोढुम् अनिच्छन्तः, सुलभतया सुखजीवनं यापयितुं काषायवस्त्रधारिणः भवन्ति। भवतः शासनेन तादृशैः प्रोत्साहः लब्धः। प्रजासु आलस्यम् आरब्धम्" इति।

शान्तसेनराजः अत्यन्तं विनयेन उक्तवान्– "गुरुदेव, व्यर्थस्य शासनस्य परिवर्तनम् एव भवतः अभिप्रायः इति ज्ञातवान्। तथैव करोमि अहम्" इति।

"सत्यम्, प्रथमं तत् कार्यं करोतु। किन्तु एकः विषयः स्मरणे भवतु। इतःपरं मताचारपालनविषये वैयक्तिकान् भवतः विश्वासविचारान् प्रजानाम् उपरि शासनद्वारा न आरोपयतु" इति उक्तवान् राजगुरुः।

राजा तद्दिनादारभ्य साधु-संन्यासिनां कृते निश्शुल्कं यत् वसति-भोजनादिकं कल्पितम् आसीत् तत् परिवर्तितवान्। 'ये अलसाः भवन्ति, तेभ्यः कठिनरीत्या दण्डनं दीयते' इति पुनः अपि उद्घोषणं कारितवान्। तदनन्तरं राज्ये सुव्यवस्था जाता।





# उत्तररामायणम्

नारदस्य वचनानि श्रुत्वा यमं जेतुं प्रस्थितः रावणः यमलोकं प्राप्य, तत्र असहनीये नरके पतित्वा यातनाः सहमानान् जनान् दृष्टवान्। अन्यस्मिन् भागे ये स्वर्गसुखानि अनुभवन्तः आसन्, तान् सुखपु षान् अपि दृष्टवान्।

इहलोके पुण्यकर्माणि कृत्वा ये यमलोकस्य स्वर्गभागं समागतवन्तः, ते विविधरूपसुखभोगान् अनुभवन्तः शान्त्या सन्तोषेण च कालं यापयन्ति स्म।

नरकभागे स्थितानां लक्षाधिकानां पापिजनानां सङ्कटादिकं दृष्ट्वा रावणः दयार्द्रहृदयः अभवत्। अतः सः तान् पापिजनान् नरकयातनातः मोचयितुं प्रयतितवान्।

रावणस्य तम् अनुचितव्यवहारं दृष्ट्वा यमकिङ्कराः क्रुद्धाः अभवन्। ते रावणस्य उपरि विविधानि आयुधानि प्रयुक्तवन्तः। तानि घोराणि आयुधानि मधुमक्षिकाणां समूहः इव पुष्पकविमानं परितः व्याप्तानि अभवन्।

पुष्पकविमानान्तर्गतानि आसनानि तथा वेदिकाः मण्डपाः च छिन्नभिन्नाः अभवन्। यमकिङ्कराः पुष्पकविमानं प्रविश्य तत्रत्यानि वस्तूनि नष्टभ्रष्टानि कृतवन्तः। किन्तु तेन अक्षयगुणयुक्तस्य तस्य विमानस्य क्वापि हानिः न अभवत्।

नष्टानि वस्तूनि पुनः पूर्वरूपाणि प्राप्य पूर्ववत् यथास्थानेषु शोभन्ते स्म। नाशस्य किमपि चिह्नम् अपि न दृश्यते स्म। यमकिङ्कराणां हस्ताः एव शक्तिशून्याः अभवन्।




अत्रान्तरे नारदः साक्षात् यमधर्मराजस्य समीपं समागतवान्।

यमः तस्मै अर्घ्यपाद्यादिकं समर्प्य, आगमनकारणं पृष्टवान्।

''भोः यमराज, दशग्रीवनामकः अजेयः राक्षसः भवन्तं प्रति आगच्छन् अस्ति। भवता सह युद्धं कृत्वा भवन्तं जेतुं सः इच्छति। तस्य उपद्रवः आरब्धः अस्ति। भवतः यमदण्डस्य का वा गतिः स्यात् इति वक्तुं न शक्यते। एतद्विषये भवन्तं जागरयितुम् एव अहम् इदानीम् आगतवान्'' इति उक्तवान् नारदः।

नारदवाक्यस्य समाप्तिसमनन्तरम् एव दूरतः प्रकाशमानस्य पुष्पकविमानस्य आगमनं दृष्टम्।

रावणः किञ्चित्कालपर्यन्तं यमकिङ्करैः सह युद्धं कृत्वा, अन्ते तेषाम् उपरि पाशुपतास्त्रस्य प्रयोगं कृतवान्। तेन अस्त्रेण उत्पन्नः वह्निः दावानलवत् सर्वासु दिक्षु व्याप्य, तस्मिन् प्रदेशे स्थितं वृक्षगुल्मादिकं सम्पूर्णतया भस्मीकृतवान्। यमकिङ्कराः तस्य वह्नेः ज्वालासु बद्धाः पतङ्गाः इव भस्मीभूताः। तदा रावणः तस्य सचिवाः च भयङ्करं गर्जितवन्तः। तेन सर्वाः दिशः प्रतिध्वनिताः।

तं शब्दं श्रुत्वा रावणः युद्धे जितवान् इति ज्ञात्वा यमः सारथिम् आहूय स्वीयं रथं युद्धार्थं सज्जीकर्तुम् आज्ञापितवान्। उत्तरक्षणे एव रक्तवर्णीयतुरङ्गसहितः रथः सिद्धः अभवत्। मृत्युदेवता तु पाशं, मुद्गरायुधं च धृत्वा रथे यमस्य पार्श्वे स्थितवती। यदा यमः रथम् आरूढवान्, तदा तस्य एकस्मिन् पार्श्वे कालदण्डः, अपरस्मिन् पार्श्वे कालपाशः च समुपस्थितौ।

रावणेन सह योद्धुं प्रस्थितं यमं दृष्ट्वा त्रिषु लोकेषु अपि क्षोभः उत्पन्नः। एतस्य परिणामः किं वा भवेत् इति देवताः अपि कम्पनं प्राप्तवत्यः।

मनोवेगवन्तः रथाश्वाः क्षणमात्रे यमं रावणस्य समीपम् आनीतवन्तः। मृत्युदेवतासहितं अतिभयानकं यमरथं दृष्ट्वा, रावणस्य सचिवाः भयभ्रान्ताः भूत्वा पुष्पकविमानतः अवप्लुत्य इतस्ततः पलायितवन्तः। किन्तु भयस्य नाम अपि



अजानन् रावणः रणोत्साहेन तत्रैव दृढं स्थितवान्।

यमरावणयोः मध्ये सप्तदिनेषु सप्तरात्रिषु च महत् युद्धं प्राचलत्। यमेन प्रयुक्तैः अस्त्रैः रावणस्य शरीरे अनेकानि क्षतानि जातानि। तथापि रावणः तत्सर्वं तृणाय मन्वानः, पराजयस्य छायाम् अपि अनिच्छन्, पलायनस्य चिन्ताम् अपि अकुर्वन्, पुनः पुनः स्वीयबाणैः यमं, मृत्युदेवतां सारथिं च भृशं ताडितवान्।

तत् दृष्ट्वा मृत्युदेवता यमम् "एतेन राक्षसेन सह अहम् एकाकिनी एव युद्धं करोमि। एतं सलीलं मारयामि। मारणविषये मम एव विशेषः अधिकारः अस्ति। अहम् असङ्ख्याकानां महाराक्षसानां मृत्युं दृष्टवती। एषः तृणसमानः मत्पुरतः कथं तिष्ठेत्?" इति उक्तवती।

"भवती तूष्णीं पश्यन्ती तिष्ठतु। एतम् अहमेव मारयामि" इति उक्त्वा यमः कालदण्डं गृहीत्वा उन्नीतवान्। कालदण्डस्य तीक्ष्णप्रकाशेन तत्र सर्वत्र असहनीयः तापः उत्पन्नः।

महाज्वालासहितः सः कालदण्डः निरन्तरम् अग्निकणान् उत्पादयन् भयङ्करः जातः। एतादृशं दण्डं रावणस्य उपरि प्रयोक्तुं यदा यमः उद्युक्तवान्, तदा सहसा ब्रह्मा तस्य पुरतः प्रत्यक्षः अभवत्।

"भोः यमराज, कालदण्डम् अधः स्थापयतु। तस्य प्रयोगः इदानीं मास्तु। एतेन रावणः यदि मरिष्यति, तर्हि मया तस्मै अनुगृहीताः वराः असत्यभूताः भवन्ति। यदि भवतः कालदण्डेन सः न मरिष्यति, तदा अपि मया येन उद्देशेन सः दण्डः सृष्टः, तस्य भङ्गः भविष्यति। मृत्युः एषः अमोघः कालदण्डः च मया निर्मितौ। यदि एतयोः वैयर्थ्यं भवति, तर्हि मम सर्वाणि कार्याणि निष्फलानि भवन्ति। मम अस्तित्वम् अपि व्यर्थं भवति। अतः उभयथा अपि कालदण्डस्य प्रयोगेण मम अस्तित्वं नश्यति तथा लोकाः निराधाराः भवन्ति। सम्प्रति रावणस्य विमोचनम् एव कल्याणाय भवति" इति जागरितवान्।

ब्रह्मदेवस्य वचनम् अङ्गीकुर्वन् यमः

कालदण्डं पार्श्वे स्थापितवान्। रावणं हन्तुम् इदानीम् अवकाशः नास्ति। अन्यत् किं वा करणीयम् अस्ति? इति चिन्तयन् यमः रथसहितः ब्रह्मणा सह तिरोहितः भूत्वा स्वर्गं गतवान्। एतत्सर्वं साक्षात् दृष्ट्वा रावणः परमानन्देन शिरांसि प्रचालितवान्। अहं यमं जितवान् इति गर्वम् अनुभवन् पुष्पकविमानम् आरुह्य यमपुरीं प्रविष्टवान्। इदानीं तस्य निवारकः कोऽपि न आसीत्। तं शरणं गन्तुम् अपि कोऽपि न आसीत्।

एतत् सर्वं पश्यन् नारदः अमितानन्दम् अनुभूतवान्।

पूर्वं ये इतस्ततः पलायितवन्तः, ते सचिवाः प्रत्यागत्य रावणस्य प्रशंसां कर्तुम् आरब्धवन्तः। इत्थं स्वजनानां प्रशंसाः स्वीकुर्वन् रावणः पुष्पकविमानम् आरुह्य पाताललोकं प्रति प्रस्थितवान्।

रावणः पुष्पकेण वरुणाधीनं समुद्रं प्रविश्य, वासुकीत्यादिनागानां वासस्थानं भोगवतीनगरं प्रविष्टवान्। तत्रापि रावणं विरुद्ध्य स्थातुं समर्थः कोऽपि न आसीत्। अतः पातालं सलीलं स्वायत्तीकृतवान् रावणः।

ततः निवातकवचाना वासस्थानं मणिमतीनगरं प्रविष्टवान्। विविधानि आयुधानि धृत्वा सिद्धाः अजेयाः निवातकवचाः रावणं विरुद्ध्य युद्धं कर्तुम् आरब्धवन्तः।



तत् युद्धं संवत्सरपर्यन्तं प्राचलत्। तथापि जयापजयौ न निर्णीतौ। तदा ब्रह्मा विमानेन तत्र समागत्य, उभयपक्षयोः समाधानवचनानि उक्त्वा, द्वयोः मध्ये सन्धिं मैत्रीं च संस्थाप्य, ततः निर्गतवान्। तेन निवातकवचाः मनःपूर्वकं रावणस्य स्नेहिता अभवन्। तेन कारणेन रावणः निवातकवचानां नगरे अतिथिरूपेण पुनः एकवर्षपर्यन्तं स्वीयनगरे इव सन्तोषेण कालं यापितवान्। तस्मिन् समये रावणः निवातकवचेभ्यः नवनवतिविधाः मायाः शिक्षितवान् याः सः इतः पूर्वं न जानाति स्म।

अनन्तरं ततः निर्गत्य रावणः वरुणस्य नगरम् अन्विष्यन् गच्छन् आसीत्।

मार्गमध्ये कालकेयानां वासस्थानं



अश्मनगरं प्राप्तम्। तत्र रावणः कालकेयैः सह युद्धं कर्तुम् आरब्धवान्। अनेके कालकेयवीराः रावणेन हताः। तथा मृतेषु शूर्पणखायाः पतिः विद्युद्जिह्वः अपि अन्यतमः। अत्यन्तबलगर्वितः सः विद्युद्जिह्वः विद्युत्सदृशीं स्वीयजिह्वां प्रसार्य तथा एव राक्षसान् मारयितुं समर्थः आसीत्। रावणः तं खड्गेन छित्त्वा मारितवान्। तस्मिन् युद्धे आहत्य चतुश्शतं कालकेयवीराः रावणेन हताः।

ततः प्रस्थितः रावणः वरुणस्य मन्दिरं प्राप्तवान्। तत् भवनं श्वेतमेघवत्, कैलासवत् च शोभते स्म। तत्र सततं क्षीरधाराः स्रावयन्तीं सुरभिनामिकां कामधेनुं रावणः दृष्टवान्। तस्याः क्षीरेण एव प्रसिद्धः क्षीरसमुद्रः उत्पन्नः आसीत्। तस्मिन् क्षीरसमुद्रे एव चन्द्रस्य जननम् अभवत्। तत्रैव अमृतम् अपि उत्पन्नम्। क्षीरसमुद्रस्य फेनान् भक्षयित्वा एव केचन ऋषयः जीवन्ति स्म। शिवस्य वाहनभूतः नन्दीश्वरः कामधेनोः पुत्रः एव। एतस्याः कामधेनोः महत्त्वं रावणः जानाति स्म।

तादृशमहिमवतीं कामधेनुं दृष्ट्वा रावणः भक्त्या तां परितः प्रदक्षिणनमस्कारादिकं कृत्वा, वरुणमन्दिरस्य समीपम् आगतवान्। तदा वरुणस्य योधाः रावणस्य उद्देशं ज्ञात्वा अग्रे तस्य आगमनं निवार्य, युद्धं कर्तुम् आरब्धवन्तः। रावणः तेषां नायकं हत्वा, अवशिष्टयोधान् अगणयन् "रावणः युद्धार्थम् आगतवान् अस्ति इति वरुणं निवेदयन्तु। भवत्सदृशैः अल्पैः सह अहं युद्धं कर्तुं न इच्छामि" इति उक्त्वा तान् ततः प्रेषितवान्।

तां वार्तां श्रुत्वा वरुणस्य पुत्राः पौत्राः च स्वीयैः स्वीयैः सैनिकैः सह रथान् आरुह्य युद्धार्थं रावणस्य पुरतः समागतवन्तः। ते सर्वे अपि उत्तरक्षणे एव रावणेन पराजिताः। अनन्तरं रावणः वरुणं युद्धार्थम् आहूतवान्। किन्तु वरुणः गृहे न उपस्थितः अस्ति, सङ्गीतश्रवणार्थं सः ब्रह्मलोकं गतवान् इति ज्ञातम्।

रावणः वरुणस्य उपरि स्वीयविजय घण्टघोषरूपेण प्रकट्य पुष्पकविमानम् आरुह्य पुनः अश्मनगरं समागतवान्। मदोन्मत्तः सः तत्र विहरन् आसीत्। तदा सः

एकम् अद्भुतं भवनं दृष्टवान्।

रावणः प्रहस्तं "एतादृशं सुन्दरभवनं कस्य इति ज्ञात्वा आगच्छतु" इति प्रेषितवान्।

प्रहस्तः तत्र गत्वा प्रथमप्राकारम् अतीत्य तत्र कमपि न दृष्टवान्। एवमेव सः सप्तप्राकारान् अपि अतीत्य यदा अन्तः प्रविष्टवान्, तदा तत्र काचन ज्वाला दृष्टिगोचरा अभवत्। तस्याः ज्वालायाः मध्ये कश्चन दिव्यपुरुषः दृष्टः। सः सूर्यसदृशतेजोवान् आसीत्। सामान्याः सलीलं तं द्रष्टुम् अपि असमर्थाः भवन्ति स्म। तस्य तेजः तथा तीक्ष्णम् आसीत्।

सः महापुरुषः प्रहस्तस्य दर्शनसमनन्तरम् एव सन्तोषेण हसितवान्। तस्य हासं दृष्ट्वा प्रहस्तः पुलकितशरीरः अभवत्। सः झटिति रावणस्य समीपं गत्वा, स्वीयम् अनुभवं कथितवान्।

तां वार्तां श्रुत्वा रावणः पुष्पकविमानतः अवतीर्य, तत् भवनं प्रति यदा प्रस्थितवान्, तदा भवनस्य सम्पूर्णं द्वारं आक्रम्य स्थितः कश्चन भयङ्कराकारः दृष्टः।

तस्य बृहदाकारस्य मस्तके चन्द्रः आसीत्। मुखात् भयङ्करज्वालाः निस्सरन्ति स्म। नेत्रद्वयम् अङ्गारवत् रक्तम् आसीत्। मुखं श्वेतम् आसीत्। मस्तकस्य उपरि केशाः वनगुल्मवत् आसन्। सान्द्राणि श्मश्रूणि, बृहद्दंष्ट्राः च आसन्। तस्य हस्ते मुद्गरायुधम् आसीत्।



सः देवो वा राक्षसो वा इति न ज्ञातम्।

सः बृहदाकारशरीरः रावणं दृष्ट्वा "भोः राक्षस, भीतिः मास्तु। भवान् किम् इच्छति? तत् निस्सङ्कोचं वदतु" इति उक्तवान् गम्भीरकण्ठेन।

"अहं युद्धम् इच्छामि" इति उक्तवान् रावणः।

"केन सह योद्धुम् इच्छति? मया सह वा, बलिना सह वा?" इति पृष्टवान् सः करालमूर्तिः।

"यस्य अधीनम् एतत् गृहम् अस्ति, तेन सह युद्धं करोमि" इति उक्तवान् रावणः।

"तथैव करोतु। बलिः अन्तः अस्ति। तेन सह निरातङ्कं यथेच्छं युद्धं करोतु। आतृप्ति

युद्धम् अस्तु'' इति उक्तवान् करालाकारः।

रावणः अन्तः गत्वा सूर्यवत् तेजश्शालिनं बलिं दृष्ट्वान्। बलिः समीपम् आगतं रावणं शिशुम् इव उन्नीय, स्वीये अङ्के संस्थाप्य ''वत्स, भवान् अत्र किमर्थम् आगतवान् इति वदतु। भवतः यां काम् अपि आशाम् अहं पूरयिष्यामि। निश्शङ्कं वदतु'' इति उक्तवान्।

''महात्मन्, अन्यत् किमपि नास्ति। पुरा विष्णुः भवन्तं वञ्चयित्वा बद्धवान् इति सर्वे वदन्ति। भवतः बन्धविमोचनं साधयितुम् अहं समर्थः अस्मि। अतः तत् कार्यं कर्तुम् एव अत्र आगतवान्'' इति रावणः सन्दर्भोचितम् उत्तरं दत्तवान्।

''एवं वा? एवं तर्हि भवता ज्ञातव्यः एकः अल्पः बिषयः अस्ति। तत्र पश्यतु, तत्र एकं कुण्डलम् अस्ति। तत् उन्नीय अत्र आनयतु'' इति उक्तवान् बलिः।

बलिना प्रदर्शितं स्थानं गत्वा रावणः दृष्टवान्। तत्र बृहच्चक्रप्रमाणकं कुण्डलं दृष्टम्। रावणः तत् कुण्डलं सलीलम् उन्नेतुं प्रयतितवान्।

किन्तु तत् किञ्चित् चालयितुम् अपि असमर्थः भूत्वा रावणः पराभूतः अभवत्। अनन्तरं सः स्वीयहस्तद्वयेन अपि तम् उन्नेतुं प्रयतितवान्। किन्तु किमपि प्रयोजनं न अभवत्।

तत् दृष्ट्वा बलिः रावणं समीपम् आहूय ''भवान् किञ्चित् चालयितुम् अपि अशक्तः जातः किल? तत् अस्माकं पूर्वजस्य हिरण्यकशिपोः कर्णकुण्डलम् अस्ति। सः केनापि मरणं मास्तु इति वरान् प्राप्य, अन्ते नरसिंहरूपं धृतवतः विष्णोः हस्तेन मरणं प्राप्तवान्। तं विष्णुम् एव भवान् द्वारसमीपे दृष्टवान्। सः सर्वदा तत्रैव स्थित्वा द्वाररक्षणं करोति। तस्य इच्छां विना कोऽपि मम समीपम् आगन्तुम् अपि न प्रभवति। तेन अवकाशः दत्तः। अतः एव भवान् अत्र आगन्तुं समर्थः जातः'' इति उक्तवान्।

तानि वचनानि श्रुत्वा रावणः क्रोधेन द्वारस्य समीपं गतवान्। किन्तु तत्र सः कमपि न दृष्टवान्।







# उद्देशपूर्वकं व्यवहारः

**सी**तापुरे नारायणः नाम कश्चन विवाहितः आसीत्। बहूनि वर्षाणि अतीतानि। तथापि तस्य पुत्रः न जातः। पुत्रप्राप्त्यर्थं सः अनेकपूजाः व्रतादीन् च कृतवान्।

दशवर्षानन्तरं कस्याश्चित् पूजायाः वा व्रतस्य वा फलम् इव नारायणस्य पत्नी कमला गर्भिणी जाता। एतेन सर्वेऽपि अतीव सन्तुष्टाः। नारायणः अतीव प्रीत्या श्रद्धया च पत्न्याः योगक्षेमं विचारयति।

एकस्मिन् दिने पत्नी कमला म्लानवदना आसीत्। तत् दृष्ट्वा नारायणः उक्तवान्- "भवत्या एवं भीतया न भवितव्यम्। मनसि किमपि अस्ति चेत् वदतु। भवत्याः इच्छां पूरयामि अहम्" इति।

कमला आतङ्केन उक्तवती- "रामपुरस्य नागवर्मणः हस्ततः मौक्तिकस्य हारः कारणीयः। सः हारः धर्तव्यः इति मम आशा। एतादृशी इच्छा किमर्थम् उत्पन्ना इति न ज्ञायते " इति।

रामपुरस्य नागवर्मा प्रसिद्धः सुवर्णवणिक्। तस्य आपणतः आभरणानि क्रीत्वा ध्रियन्ते चेत् शुभदायकम् इति जनाः वदन्ति। अतः एव तस्य सकाशात् मौक्तिकहारः क्रेतव्यः, सः हारः धृतः चेत् सुखप्रसवः भवति इति तस्याः विश्वासः।

अन्यस्मिन् समये चेत् नारायणः सर्वथा एतत् न अङ्गीकरोति। इदानीं तु यथाशक्ति पत्न्याः इच्छाः पूरणीयाः इति चिन्तयन् "अस्तु, भवत्याः कृते अहं रामपुरं गत्वा नागवर्मणः हस्ततः एव मौक्तिकहार कारयित्वा आनयामि" इति उक्तवान्।

"भवान् समीपे नास्ति चेत् मम भयं भवति। अतः भवान् अत्रैव तिष्ठतु। विश्वासयोग्यं कञ्चित् रामपुरं प्रेषयतु" इति उक्तवती कमला।

स्नेहितस्य सीतारामस्य पुत्रः गणपति



रामपुरं प्रति प्रेषणीयः इति चिन्तितवान् नारायणः।

गणपतिः विंशतिवर्षीयः युवकः। सः तक्षककार्ये पितुः साहाय्यं करोति। रामपुरं द्रष्टव्यम् इति तस्य महत् कुतूहलम् आसीत्। किन्तु रामपुरे तस्य स्नेहितः वा बन्धुः वा कोऽपि न आसीत्। 'तत्र गतं चेत् भोजनार्थम् उपाहारमन्दिरम् गन्तव्यम्। वसत्यर्थम् अपि धनं दातव्यम्। मार्गव्ययः अपि महान् भवति' इति तस्य पिता तं न प्रेषितवान।

अतः नारायणः यदा उक्तवान् तदा गणपतिः उत्साहेन अङ्गीकृतवान्। "भवान् रामपुरं गत्वा नागवर्मणः आपणे मौक्तिकहारं कर्तुं वदतु। तत्र एव स्थित्वा हारं सज्जीकारयित्वा एव आनयतु। रामपुरे मम बन्धुः सिद्धराजः अस्ति। अहं भवन्त प्रेषितवान् इति तं वदतु। तस्य गृहे एव भवतः वसतिः। एतस्य प्रयाणस्य व्ययम् अहं ददामि" इति उक्तवान् नारायणः।

एतत् सर्वं गणपतिः सन्तोषेण अङ्गीकृतवान्। एवं रीत्या पुत्रस्य इच्छा पूरिता भवति इति गणपतेः पिता अपि सन्तुष्टः।

रामपुरं गन्तुं प्रथमतया सीतापुरस्य पार्श्वग्रामं प्रति वृषभशकटेन गन्तव्यम्। ततः भाटकार्थम् अश्वशकटः लभ्यते। गणपतिः एवं रीत्या प्रयाणं कुर्वन् रामपुरं प्राप्तवान्। तत्र अन्यान् विचार्य सिद्धराजस्य गृहं गतवान्। किन्तु गृहगमनसमये अकस्मात् मार्गे स्खलितः सः पतितवान्। वस्त्राणि मलिनानि जातानि। कथञ्चित् सिद्धराजस्य गृहं प्राप्तवान् गणपतिः स्वस्य परिचयम् आगमकारणम् इत्यादिकं सिद्धराजम् उक्तवान्।

सिद्धराजः अभिमानेन "अस्माकं नारायणेन प्रेषितः भवान् इति चेत् प्रधानः अतिथिः एव। भवतः हस्ते विद्यमानं स्यूत मम समीपे ददातु। अहं सुरक्षितं स्थापयामि। गृहस्य पृष्ठतः कूपः अस्ति। भवान् तत्र स्नानादिकं समाप्य आगच्छतु" इति उक्तवान्।

सिद्धराजस्य पुत्रः गणपतिं कूपसमीपं नीतवान्। तस्मै द्रोणीं राज्जुं च दत्तवान्।

तावति काले सिद्धराजः एकं बृहत्

उदभाण्डम् आनीय तत्र स्थापितवान्।

सः गणपतिम् उक्तवान् – "एतस्मिन् उदभाण्डे जलं पूरयित्वा स्नानं करोतु। स्नानानन्तरम् अपि एतस्मिन् जलं पूर्णं भवेत्" इति। 'गृहम् आगतम् अतिथिं प्रति एतादृशं कार्यं वदन्ति किल' इति गणपतिः आश्चर्यचकितः। तथापि तेन यथा उक्तं तथैव कृतवान्। प्रयाणकारणतः प्रथम् एव श्रान्तः सः जलपूरणेन इतोऽपि श्रान्तः।

गणपतिः स्नानसमये स्वकीयं मलिनं वस्त्रं क्षालयित्वा प्रसारितवान्। एतेन कारणेन 'सिद्धराजः मां कर्मकरं चिन्तितवान् स्यात्' इति गणपतेः संशयः उत्पन्नः।

सिद्धराजस्य सर्वेऽपि गृहसदस्याः पीठस्य उपरि भोजनार्थम् उपविष्टाः। तेषां पुरतः रजतस्थालिकाः आसन्। गणपतेः कृते पीठं न स्थापितम्। भूमौः कदलीपत्रं स्थापितम् आसीत्। सर्वेभ्यः उष्णम् अन्नं परिवेषितवन्तः। किन्तु गणपतये पूर्वदिनस्य शीतलम् अन्नं परिवेषितवन्तः।

भोजनानन्तरं गणपतेः निद्रा आगता। सर्वेऽपि मञ्चे शयनं कृतवन्तः। गणपतये एकं कटं दत्तवन्तः। गणपतिः निश्चिन्ततया कटस्य उपरि निद्रितवान्।

परेद्युः प्रातः सिद्धराजस्य पत्नी निद्रातः गणपतिम् उत्थाप्य उक्तवती – " भोः, अस्माकं गोष्ठस्य कर्मकरः अद्य न आगतवान्। किमर्थम् इति न जानामि। भवान् गोष्ठं गत्वा क्षीरदोहनं कृत्वा आगच्छति वा?" इति।





तस्मिन् समये गृहसदस्याः सर्वेऽपि निद्रायाम् एव आसन्। गणपतिः गृहस्य पृष्ठतः विद्यमानं गोष्ठं गत्वा महिष्याः क्षीरदोहनं कृतवान्। सिद्धराजस्य पत्नी तेन एव द्वारा कूपतः यथेष्टं जलसङ्ग्रहणम् अपि कारितवती।

गणपतिः किमपि प्रत्युत्तरं न दत्तवान्। तया उक्तानि सर्वाणि कार्याणि कृत्वा "अहम् इदानीं नागवर्मणः आपणं गत्वा आगच्छामि" इति उक्तवान्।

"अहम् अपि तत्र आगच्छामि। गच्छामः" इति उक्तवान् सिद्धराजः।

गमनसमये सिद्धराजस्य हस्ते भारयुतः एकः स्यूतः आसीत्। तं स्यूतं गणपतेः हस्ते यच्छन् सः उक्तवान्– "एतस्मिन् स्यूते कूष्माण्डफलानि सन्ति। अस्माकं गमनमार्गे मम एकः स्नेहितः अस्ति। एतानि फलानि तस्मै देयानि" इति।

तं कूष्माण्डस्यूतं वोढुम् अशक्तः अपि गणपतिः सङ्कटम् अनुभवन् कथञ्चित् नीतवान्।

कूष्माण्डफलानि तस्मै स्नेहिताय दत्त्वा सिद्धराजः गणपतिं नागवर्मणः सुवर्णापणं नीतवान्।

"नागवर्मन्, नारायणः मम प्रियस्नेहितः। बहुवर्षानन्तरं तस्य पत्नी गर्भिणी जाता अस्ति। सा मौक्तिकहारं धर्तुम् इच्छति। श्रद्धया मौक्तिकहारः निर्मातव्यः भवता। मूल्यम् अपि अधिकं न भवेत्" इति सिद्धराजः नारायणस्य परतया सर्वम् उक्तवान्।

नागवर्मा एतत् अङ्गीकृतवान्। हारनिर्माणार्थं दिनचतुष्टयम् आवश्यकम् इत्यपि सूचितवान्।

दिनचतुष्टयम् अपि सिद्धराजस्य गृहसदस्याः गणपतिद्वारा सर्वाणि कार्याणि कारितवन्तः। किन्तु तेषु कोऽपि गणपतिं न निन्दितवान्। बहूनि कार्याणि कारितवन्तः इति एकम् असमाधानं विना तस्मिन् गृहे गणपतिविषये न्यूनता न दृष्टा। सः अपि स्वकीयं कष्टं तेभ्यः न प्रदर्शितवान्।

हारः यदा सिद्धः तदा गणपतिः ग्रामं प्रति प्रस्थितः। तदा "पुनः यदा कदापि आगच्छति

चेत् अस्माकं गृहे एव वासः करणीयः भवता" इति सिद्धराजस्य गृहसदस्याः सर्वेऽपि अभिमानेन तम् उक्तवन्तः।

गणपतिः सीतापुरम् आगत्य मौक्तिकहारं नारायणाय दत्तवान्। नारायणः महता सन्तोषेण तस्य प्रयाणविषयं पृष्टवान्।

गणपतिः प्रथमं वक्तुं किञ्चित् सङ्कोचम् अनुभूतवान्। अनन्तरम् अनुभवान् वक्तुम् आरब्धवान्। "ते सर्वेऽपि सज्जनाः एव। किन्तु अतिथिभिः सह कथं व्यवहारः करणीयः इति ते प्रायः न जानन्ति। मद्द्वारा यथेष्टं कार्याणि कारितवन्तः। एतत् अनुचितं भवेत् इति ते न जानन्ति वा इति मम विचारः" इति उक्तवान् च।

प्रवृत्तं वृत्तान्तं श्रुत्वा नारायणः कोपेन उक्तवान्– "तथा किमपि नास्ति। ते उद्देशपूर्वकम् एव तथा कृतवन्तः। दिनचतुष्टयं भवते भोजनं दत्तवन्तः किल? कार्यद्वारा तस्य व्ययं स्वीकृतवन्तः। तावत् कार्पण्यम्!" इति।

"कार्पण्यम् अपि न स्यात्। यतः तेषां गृहे तावत् कार्पण्यं न दृष्टम्। उद्देशपूर्वकम् एव एवं कृतवन्तः इति वक्तुं किं प्रमाणम्? अथवा एवम् अपि स्यात् - गमनसमये मम वस्त्राणि मलिनानि आसन्। तत् दृष्ट्वा ते मां कर्मकरं चिन्तितवन्तः स्युः" इति उक्तवान् गणपतिः।

"वस्तुस्थितिं न जानाति भवान्। अतः तथा आचरितुं प्रमाणं नास्ति इति वदति। षण्मासेभ्यः पूर्वं ते कञ्चित् अत्र प्रेषितवन्तः आसन्। तदानीं वयं यथा आचरितवन्तः तथैव इदानीं ते अपि आचरितवन्तः। एतेन सिध्यति किल – ते उद्देशपूर्वकं व्यवहृतवन्तः इति?" इति उक्तवान् नारायणः।

इदानीं गणपतिः वस्तुस्थितिं ज्ञातवान्– नारायणविषयकेन कोपेन ते मया सह तथा व्यवहृतवन्तः इति। किन्तु नारायणः इदानीम् अपि आत्मनः दोषं न जानाति।

'इतःपरम् एतादृशैः सह जागरूकतया एव व्यवहरणीयम्' इति दृढं निश्चितवान् गणपतिः।





# चतुरः तन्तुवायः

पूर्वं कश्चन राजा आसीत्। सः कदाचित् राजास्थाने उपविष्टः आसीत्। तदा अन्यदेशीयः कश्चन दूतः आगतवान्। सः सिंहासनं परितः सुधाखण्डेन एकां रेखां लिखित्वा तूष्णीं स्थितवान्।

राजा मन्त्रिणः आहूय पृष्टवान्– "एतस्य उद्देशः कः स्यात्?" इति।

मन्त्रिणः एतस्य उत्तरं वक्तुं न शक्तवन्तः। एतेन कुपितः राजा "गच्छन्तु, एतस्मिन् क्षणे एव एतस्य उत्तरं वक्तुं समर्थं कञ्चित् पुरुषम् आनयन्तु" इति आज्ञापितवान्।

एतेन भीताः मन्त्रिणः समर्थम् आनेतुं स्वयं प्रस्थिताः। तेषु केचन एकं गृहं प्रविष्टवन्तः। तत्र कस्मिंश्चित् प्रकोष्ठे एका आन्दोलिका स्वयं डोलायमाना आसीत्। अट्टे शोषणार्थं धान्यानि प्रसारितानि आसन्। तानि भक्षयितुम् इच्छन्तः पक्षिणः प्रतीक्षमाणाः आसन्। किन्तु उपरि व्यजन चलत् आसीत् इत्यतः पक्षिणः धान्यानां समीपम् आगन्तुम् असमर्थाः आसन्।

मन्त्रिणः अन्यं प्रकोष्ठं प्रविष्टवन्तः। तत्र ते वेमायाः पार्श्वे उपविष्टं कञ्चित् तन्तुवायं दृष्टवन्तः।

"किं भोः, एतत् विचित्रम्? आन्दोलिका स्वयं डोलायमाना अस्ति। व्यजनम् अपि स्वयं चलत् अस्ति। कथम् एतत्?" इति पृष्टवन्तः मन्त्रिणः।

"तस्य सर्वस्य व्यवस्थम् अहम् एव कृतवान्। आन्दोलिकार्थं, व्यजनार्थं च एकैकं सूत्रं वेमायां बद्धवान् अस्मि। वेमया सह तौ अपि चलतः" इति उक्तवान् तन्तुवायः।

"आश्चर्यकरम् एतत्! भवादृशम् एव अन्विष्य आगताः वयम्। अस्माकम् एका समस्या अस्ति। तस्याः परिहारं वक्तुं

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

शक्नोति वा?" इति पृष्टवन्तः मन्त्रिणः।

"का सा समस्या?" इति पृष्टवान् तन्तुवायः। मन्त्रिणः स्वकीयां समस्यां निवेदितवन्तः।

तन्तुवायः किञ्चित्कालं विचिन्त्य "तत्र आगत्य एव मया परिहारः वक्तव्यः" इति वदन् वराटकद्वयं स्वीकृत्य महाराजस्य सभास्थानं गतवान्।

तन्तुवायः महाराजं साष्टाङ्गं प्रणम्य सिंहासनं परितः विद्यमानां रेखाम् अवलोकितवान्। अनन्तरं अन्यदेशीयं दूतं पश्यन् स्वेन आनीतं वराटकद्वयं रेखायाः उपरि पातितवान्।

दूतः स्वकीयकोशतः एकमुष्टिमितं यावानलधान्यं अधः पातितवान्।

तन्तुवायः मन्दहासपूर्वकम् एकं कुक्कुटम् आनीय तत्र त्यक्तवान्। सः कुक्कुटः सर्वाणि धान्यानि खादितवान्। तत् दृष्ट्वा दूतः वेगेन ततः निर्गतवान्।

"एतत् सर्वं किम्? अहम् एकस्य अपि अर्थं न ज्ञातवान्" इति उक्तवान् राजा।

"अत्र कोऽपि विशेषः नास्ति महाप्रभो! तस्य देशस्य राजा 'भवतां देशस्य आक्रमणार्थम् आगच्छामि' इति दूतद्वारा वार्तां प्रेषितवान्। 'युद्धार्थं वयं सिद्धाः, उत शरणं गच्छेम?' इति ज्ञातुं सः दूतः प्रतीक्षमाणः आसीत्। 'युद्धे जयप्राप्तिः तु अस्माकम् अक्षक्रीडा इव' इति अहं वराटकद्वारा सूचितवान्। अस्माकं महत् सैन्यम् अस्ति इति सूचयितुं सः यावानलधान्यं पातितवान्। युद्धे कोऽपि सैनिकः न अवशिष्येत इति अहं कुक्कुटद्वारा सूचितवान्। तेन दूतः निर्गतवान्" इति विवरणं दत्तवान् तन्तुवायः।

"साधु! साधु! वस्तुतः भवान् एव बुद्धिमान्। इतःपरं भवता तन्तुवायवृत्तिः करणीया नास्ति। भवान् अत्रैव तिष्ठतु। भवन्तं प्रधानमन्त्रिस्थाने नियोजयिष्यामि" इति उक्तवान् राजा सन्तोषेण।

"हन्त! एवं न वदतु महाप्रभो। गृहे मम तु सहस्रशः कार्याणि सन्ति एव। एतादृशं कार्यम् अहं न इच्छामि। क्षाम्यतु" इति उक्त्वा सः तन्तुवायः ततः निर्गतवान् एव।



# कृपणः अनन्तः

अनन्तस्य यथेष्टम् ऐश्वर्यम् अस्ति, किन्तु सः कृपणः। एकदा सः विना व्ययं तीर्थप्रदेशान् सर्वान् द्रष्टुम् इच्छन् एकम् उपायं चिन्तितवान्। तदनुगुणं अन्धः इव पङ्गुः इव च अभिनयन् 'मूकत्वम् अन्धत्वं च अस्ति' इति लिखितं फलकं कण्ठे स्थापयित्वा गृहात् प्रस्थितवान्।

एकदा सः कस्मिंश्चित् तीर्थक्षेत्रे भिक्षायाचनं कुर्वन् आसीत्। तदा तस्य ग्रामीणौ गोपीनाथः, रामकृष्णः च तं दृष्टवन्तौ।

तदा गोपीनाथः रामकृष्णम् उक्तवान्– "हन्त! भवतः ग्रामः समग्रतया जले निमग्नः इति वयम् एतम् अनन्तं वदामः चेदपि सः श्रोतुं न शक्नोति" इति।

तत् वचनं श्रुत्वा चकितः अनन्तः अन्धः मूकः च इति क्रियमाणम् अभिनयम् अपि विस्मृत्य सम्भ्रमेण– "किं? किम् उक्तम्? मम ग्रामः जले निमग्नः वा? मदीयं विशालं भवनं, गृहस्थानि धान्यादीनि च किं जले निमग्नानि? हा हन्त!" इति।

एतावत्पर्यन्तं जनाः 'एषः मूकः अन्धः च' इत्येव चिन्तितवन्तः आसन्। इदानीं तु ते वस्तुस्थितिं ज्ञातवन्तः। अतः ते– "तादृशस्य महाधनिकस्य अपि एतस्य दुराशा! भिक्षायाचनं करोति किल!! निर्लज्जः! वञ्चकः!" इति निन्दन्तः सम्यक् ताडितवन्तः अपि।

एतत् दृष्ट्वा उच्चैः हसन् गोपीनाथः ततः गतवान्। 'मां पाठयितुम् एव गोपीनाथः तथा उक्तवान् आसीत्' इति अनन्तः अपि अनन्तरं ज्ञातवान्।





# कापालिकाकृपा

आफ्रिकादेशे पर्वतप्रान्ते सहोदरौ निवसतः। तौ अरण्ये मृगयार्थं गच्छन्तौ, अपेक्षितान् आहारपदार्थान् सङ्गृह्णन्तौ जीवनं यापयतः स्म।

एकदा तौ सहोदरौ एकैकां रज्जुं चर्मस्यूतं च स्कन्धे आरोप्य धनुर्बाणादीन् गृहीत्वा मृगयार्थं प्रस्थितवन्तौ। किञ्चिद्दूरं गमनानन्तरं तौ गहनारण्यं प्रविष्टवन्तौ। तत्र मार्गः किं, सूर्यदर्शनम् अपि दुर्लभम् आसीत्।

तौ अग्रे यदा गतवन्तौ तदा एकत्र पङ्क्तिक्रमेण अधोमुखतया स्थापितानि मृत्पात्राणि दृष्टवन्तौ।

"किम् एतत्! निर्जने प्रदेशे कथम् एतानि आगतानि? केन किमर्थं वा एतानि स्थापितानि स्युः?" इति आश्चर्येण अग्रजं पृष्टवान् अनुजः।

"न जानामि एतेभ्यः कः अपायः आपतेत इति। कस्यापि मान्त्रिकस्य सम्बन्धः स्यात् अपि। अस्थाने किमर्थं कुतूहलम् अस्माकम्?" इति उदासीनभावनया उत्तरितवान् अग्रजः।

अग्रजः स्वभावतः भीरुः। किन्तु अनुजः तथा न। महत् धैर्यं तस्य। "तेषाम् अधः किम् अस्ति इति द्रष्टव्यम् एव" इति उक्तवान् सः।

एकैकं पात्रम् उन्नीय उन्मुखीकृत्य पङ्क्तौ स्थापितवान् अनुजः। अग्रजः तु भीत्या दूरे स्थित्वा पश्यन् आसीत्।

कस्यापि मृत्पात्रस्य अधः किमपि न आसीत्। किन्तु अन्तिमं यदा उन्नीतं तदा तस्य अधः स्थिता एका वामना वृद्धा कापालिका मण्डूकवत् उत्प्लुत्य बहिः आगतवती।

बहिः आगता सा अनुजम् अपश्यन्ती दूरे स्थितस्य अग्रजस्य समीपं गत्वा– "किमर्थं

"आफ्रिकादेशस्य जानपदकथा"



अनुजः वृक्षमूले परशुना बलेन ताडितवान्। तदा वृक्षतः एका गौः बहिः आगता। एवं तस्य एकैकप्रहारतः अपि धेनुः वृषभः वा, अजः मेषः वा बहिः आगच्छति स्म। अल्पे एव काले तत्र एकः पशुसमूहः एव सिद्धः अभवत्।

''एते पशवः भवतः एव। एतान् भवान् गृहं नेतुम् अर्हति। अहम् अत्रैव तिष्ठामि'' इति उक्तवती सा वृद्धा कापालिका।

अनुजः कृतज्ञतावचनानि उक्त्वा पशुभिः सह अग्रजस्य समीपं गतवान्।

''सा वृद्धा कापालिका एतत्सर्वं अनुगृहीतवती। सा यदा आहूतवती तदा भवान् न गतवान् एव'' इति उक्त्वा अग्रजाय पशुप्राप्तिप्रकारं निवेदितवान् अनुजः। अग्रजः तु सर्वं मौनं श्रुतवान्, तावदेव।

उभौ अपि पशुभिः सह ग्रामं प्रति प्रस्थितवन्तः।

तदा तु ग्रीष्मकालः। मध्याह्ने महान् आतपः। सहोदरयोः महती पिपासा आसीत्। पशवः अपि जलार्थं तृणार्थं च आक्रन्दन कुर्वन्तः आसन्।

किञ्चिद्दूरं गमनानन्तरं अनुजः उच्चैः– ''पश्यतु भोः जलम्!'' इति उद्घोषितवान्।

तयोः पुरतः एकः अगाधः खातः आसीत्। खाते वृक्षाणां मध्ये वेगेन प्रवहन् जलप्रवाहः ताभ्यां दृष्टः। किन्तु खातस्य अन्तः गन्तुं कोऽपि मार्गः न आसीत्। उभयपार्श्वे अपि

तथा भीतः हरिणः इव मां पश्यति? अहं न अपायकारिणी। आगच्छतु मया सह। विचित्रम् एकं प्रदर्शयिष्यामि'' इति उक्तवती।

किन्तु अग्रजः भीत्या कम्पमानः अविचलतया तत्रैव मौनं स्थितवान्।

''ही, भीरुः शुनकः इव'' इति निन्दन्ती सा अनुजस्य दिशि परिवृत्य आत्मना सह आगन्तुम् अनुजम् उक्तवती। सदासिद्धः अनुजः तस्याः वामनायाः कापालिकाया अनुसरणं कृतवान्।

किञ्चिद्दूरं गमनानन्तरं वृद्धा एकत्र स्थित्वा वस्त्रान्तरितं परशुं बहिः आनीय अनुजस्य हस्ते दत्त्वा ''एतेन परशुना एतस्य वृक्षस्य छेदनं करोतु'' इति आज्ञास्वरेण उक्तवती।

पर्वतः!

"रज्जुसाहाय्येन माम् अधः अवतारयति वा? अहं पिपासां निवार्य उपरि आगच्छामि" इति उक्तवान् अग्रजः।

ओम् इति अङ्गीकृत्य अनुजः अग्रजं खाते अवतारितवान्। रज्जुसाहाय्येन अधः गतः अग्रजः जलं पीत्वा प्रत्यागतवान्।

"अधः गमनं यद्यपि कष्टकरं,किन्तु जलं तु अमृतसमानम्" इति उक्तवान् अग्रजः।

"एवं तर्हि माम् अपि एवम् एव अवतारयतु। अहम् अपि पिपासां निवारयामि" इति उक्तवान् अनुजः।

रज्जुसाहाय्येन अनुजम् अवतारितवान् अग्रजः। तदा तस्य मनसि काचित् दुर्भावना उत्पन्ना। यतः पशूनां दर्शनेन सः लुब्धः जातः आसीत्। रज्जोः अपरम् अन्तभागम् अपि खाते क्षिप्त्वा पशुसमूहेन सह सः गृहं प्रत्यागतवान्। "काचित् कापालिका एतत् सर्वं दत्तवती" इति मातापितरौ उक्तवान् च।

"एवं वा? अनुजः कुत्र?" इति पृष्टवन्तौ मातापितरौ।

"सः इतोऽपि न प्रत्यागतवान् वा? अहम् अग्रे चलितुं न शक्नोमि इति उक्त्वा मध्याह्ने एव प्रत्यागतवान् किल सः। अनन्तरम् अहं तं न दृष्टवान् एव" इति असत्यम् उक्तवान् अग्रजः।

रात्रिः अतीता। तथापि अनुजः न प्रत्यागतवान्। 'मृगयार्थं दूरं गतवान् स्यात्'



इति समाधानं प्राप्तवन्तौ मातापितरौ। तद्दिनम् एवं प्रतीक्षायाम् एव अतीतम्।

अनन्तरदिने उषःकाले ग्रामीणाः स्त्रियः जलार्थं यदा गतवत्यः तदा ताः मार्गे मधुमक्षिकाणां गुञ्जनं श्रुतवत्यः। एवं गुञ्जनं श्रुतं चेत् ताः मधुमक्षिकाः अनुसरन्ति स्म ग्रामीणाः। यतः मधुमक्षिकाः अन्ते तत्रैव गच्छन्ति यत्र मधुसङ्गृहीतं भवति इति ते जानन्ति। पुरुषाः तत्र गत्वा मधु सङ्गृह्य आगच्छन्ति।

अतः ताः स्त्रियः शीघ्रं गृह प्रत्यागत्य पुरुषान् उक्तवत्यः– "शीघ्रं गच्छन्तु, मधुमक्षिकाः गुञ्जन्ति" इति।

सहोदरयोः पिता, अन्ये केचन ग्रामीणाः

च मधुमक्षिकाः अनुसृतवन्तः। ताः मधुमक्षिकाः तान् बहुदूरं नीतवत्यः।

सामान्यतः एवम् अनुसरणेन अनतिदूरे एव मधु लभ्यते स्म। इदानीं तु बहुदूरं गतं चेदपि मधुदर्शनम् एव नास्ति! अतः निराशाः केचन ग्रामीणाः ग्रामं प्रत्यागतवन्तः।

सहोदरयोः पिता, अन्ये द्वित्राः च आरब्धं प्रयत्नं त्यक्तुम् अनिच्छन्तः गुञ्जनम् अनुसृत्य अग्रे गतवन्तः।

मधुमक्षिकाः अग्रे गत्वा खाते अदृश्याः अभवन्। प्रवेष्टुम् अशक्ये खाते मधु दृष्टं चेत् किं प्रयोजनम्? अतः सर्वे ते ग्रामीणाः निराशाः।

सहोदरयोः पिता खाते दृष्टिं प्रसारितवान्। तेन तत्र मधुमूलं न दृष्टम्। किन्तु कश्चित् पुरुषः तेन दृष्टः इव। क्षीणः कण्ठध्वनिः अपि तैः श्रुतः।

''एषः मम पुत्रः! निश्चयेन खाते स्थितः सः एव। हा! प्रियपुत्र!'' इति उच्चैः क्रन्दितवान् पिता।

चत्वारः ते महता प्रयत्नेन खाते रज्जुं क्षिप्त्वा तदाधारेण अनुजम् उपरि आनीतवन्तः।

उपरि आगतः अनुजः कापालिकायाः दर्शनं, पशुप्राप्तिः, अग्रजस्य वञ्चना इत्यादिकं सर्वं सविस्तरं निवेदितवान्।

पुत्रस्य वचनानि श्रुत्वा पिता उच्चैः रोदनम् एव कृतवान्। ''मम ज्येष्ठः पुत्रः कीदृशीं क्रूरताम् आचरितवान्! कल्पनाम् अपि कर्तुं न शक्नोमि। मधुमक्षिकाणां द्वारा भवतः अभिज्ञानं ज्ञातम्। अन्यथा न जाने भवतः का गतिः अभविष्यत् इति'' इति प्रीतिं प्रदर्शयतन् पुत्रम् उक्तवान् पिता।

''सः महापापी! तस्य शूलारोपणं करणीयम्'' इति तत्रस्थाः एककण्ठेन उक्तवन्तः।

अनुजः उज्जीवितः इति वार्ताम् अग्रजः केन मार्गेण ज्ञातवान् इति तु न जानीमः। तेषां प्रत्यागमनतः पूर्वं सः ग्रामात् पलायितवान् आसीत्। पुनः कदापि तस्य नाम अपि न श्रुतम्।






## पेङ्ग्विन् अण्डानि

किङ्ग् पेङ्ग्विन् पक्षिणी पादपार्श्वे स्थिते स्यूताकारके चर्मपटले अण्डं सुरक्षितं स्थापयति। परिसरस्य उष्णता ४०°C अस्ति चेदपि अण्डात् शावकोत्पत्त्यर्थम् अपेक्षितां +४०°C उष्णतां सा परिरक्षति।



## वस्तुस्थितिः

वृश्चिकः अग्निमध्ये पतितः चेत् दंशनपूर्वकम् आत्मनि विषं संयोज्य आत्महत्यां करोति इति सर्वे भावयन्ति। किन्तु एतत् न सत्यम्। इतरविषजन्तूनाम् इव वृश्चिकस्य विषम् अपि तदीये शरीरे हानिं न जनयति।

### विशिष्टः भल्लूकः

भल्लूकेषु काचित् विशिष्टा जातिः अस्ति, यत्र च जातः आहारार्थं सामान्यतः ७०% सस्यानि एव अवलम्बते। शाकाहारेण सह अल्पान् कीटान्, मूषकान्, पक्षिणः, चिक्रोडम्, अल्पाकारकं हरिणं च एषः भक्षयति।



# पुस्तकं दत्त्वा आगन्तव्यम्

| | |
|---|---|
| अनन्तः - शेखर! किं कुर्वन् अस्ति? | Shekar! What are you doing? |
| शेखरः - किमपि नास्ति। किमर्थम्? | Doing nothing. Why? |
| अ - एतत् पुस्तकं श्रीहरये दत्त्वा आगन्तव्यम् आसीत् किल? | This book is to be handed over to Mr. Sreehari, you know? |
| शे - कः श्रीहरिः? सः दीर्घकायः, उपनेत्रधारी, सर्वदा संस्कृतेन वदति... | Who is Sreehari? Is that tall guy who wears spectacles and always speaks in Sanskrit? |
| अ - आम्, आम्। सः एव। | Yes! yes! The same chap. |
| शे - तस्य गृहं न जानामि किल? | I don't know his place. |
| अ - मार्गम् अहं सूचयामि। भवान् चन्द्रविलासनामकम् उपाहारमन्दिरं जानाति वा? | I will tell you which way to go. Do you know Hotel Chandravilas? |
| शे - नेत्रचिकित्सालयस्य पार्श्वे किल? | It is next to the Eye Clinic isn't it? |
| अ - न भोः। तत् चन्द्रभवनम्। चन्द्रविलासः तु सञ्जयचित्रमन्दिरस्य समीपे। | No, my friend. It is Chandra Bhavan. Chandravilas is near Sanjay Talkies. |
| शे - आम्, ज्ञातवान्। अट्टद्वयात्मकं भवनम्। पुरतः उन्नतम् अशोकवृक्षद्वयम् अस्ति। | Oh! Yes. I understand. That is a two storeyed building with two big Ashoka trees in front. |
| अ - आं, तदेव। तस्य पुरतः महामार्गे गच्छतु। ततः तृतीये उपमार्गे....। | Yes. That is it. Proceed on the main road in front of it and turn to 3rd cross. |
| शे - दक्षिणतः वा वामतः वा? | On which side is it? To the left or right? |
| अ - दक्षिणतः एव। यतः वामतः कश्चन प्राकारः अस्ति। ततः पञ्चमं गृहम्। गृहसङ्ख्या च ४५६। | To the right, where you will find some compounds to the left. From there it is the 5th house. Door No.456. |
| शे - कृपया चित्ररूपेण लिखित्वा ददातु भोः। कदा गन्तव्यम्? | Please let me have a sketch. When should I go? |
| अ - अद्य यदा कदापि। यतः श्रीहरिः अद्य गृहे एव तिष्ठति। | Any time, today. Sreehari will be at house throughout. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां एप्रिल्-८७ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्ध-वाक्यद्वयेन लिखित्वा फेब्रवरी-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'डिसेम्बर्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **पठनसौलभ्यं, मम सौभाग्यम्।**

द्वितीयचित्रम् - **जलदौर्लभ्यं, जनदौर्भाग्यम्।**

प्रेषिका— लक्ष्मी वारियर्, २७१, पञ्चमः मुख्यमार्गः, विवेकनगरम्, बेङ्गलूरु-४७.

---


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३०.००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६.

**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**

रसप्रश्नाः

# गणे अनर्हः कः?

(अधः त्रयाणां केचन गणाः लिखिताः सन्ति। किन्तु गणे अनर्हः एकः अन्योऽपि शब्दः तत्र प्रविष्टः अस्ति। सः कः शब्दः इति अन्वेषणं कुर्वन्तु। किमर्थं सः तस्मिन् गणे प्रवेशं न अर्हति इत्यपि सूचयन्तु।)

१. ब्रह्मा, विष्णुः, महेश्वरः, देवेन्द्रः।

२. स्वर्गः, मर्त्यः, आकाशः, पातालः।

३. धर्मः, अर्थः, मोक्षः, मरणम्, कामः।

४. ब्रह्मचर्यं, कौमारम्, संन्यासः, वानप्रस्थं, गार्हस्थ्यम्।

५. सेनानी, पादातिः, रथः, अश्वः, गजः।

६. दक्षिणः, गार्हपत्यः, कृष्णवर्त्मा, आहवनीयः।

७. तिथिः, दिनाङ्कः, वासरः, योगः, करणम्, नक्षत्रम्।

८. क्षीरं, शर्करा, घृतं, जलम्, दधि, मधु।

९. विष्णुः, शङ्करः, ब्रह्मा, देवी, गणपतिः, सूर्यः।

१०. पृथिवी, जलं, तेजः, नक्षत्राणि, वायुः, आकाशः।

उत्तराणि –

१. देवेन्द्रः– त्रिमूर्तिषु न प्रविशति।

२. आकाशः– लोकः न।

३. मरणं– पुरुषार्थः न।

४. कौमारम्– आश्रमः न।

५. सेनानी– चतुरङ्गेषु न प्रविशति।

६. कृष्णवर्त्मा– त्रेताग्निषु न प्रविशति।

७. दिनाङ्कः– पञ्चाङ्गस्य अङ्गत्वं नास्ति एतस्य।

८. जलम्– पञ्चामृतस्य अङ्गत्वं नास्ति।

९. ब्रह्मा– पञ्चायतनपूजायाम् एतस्य पूजा नास्ति।

१०. नक्षत्राणि– पञ्चभूतेषु अन्यतमानि न।

# 'मेरी'

22 कैरट् स्वर्ण-आवृत जेवरों की चातुरी में है वीश्व नामी उन्नमना की प्रकृति । चमकीला सुन्दरी । सब की मन पसरद, बेजाड रंगरूप में गारंटी जेवरों । मंगवाते वक्त ज़ेवरों की संक्षा सूचीत करे । वी पी पी. खर्च अलग । मुफ्त केटलाग के लिए लिखे ।

No.212 Rs. 75/50
No.213 Rs. 75 50
No.93 Rs. 75/50
No.94 Rs. 75/50
No.96 Rs. 75/50
No.97 Rs. 75/50
No.160 Rs. 80 50
No.161 Rs. 80 50
No.112 Rs. 25 50
No.113 Rs. 25 50
No.133 Rs 50 50
No.134 Rs 50 50
No.135 Rs. 50 50
No.105 Rs. 150/50
No.190 Rs. 50 50
No.35 Rs. 180 50
No.108 Rs. 75 50
No.189 Rs 50 50
No.67 Rs. 50/50
No.74 Rs. 75/50 STONE
No.193 Rs. 65 50
No.14 Rs. 200/50
No.16 Rs. 200/50
No.25 Rs. 225 50
No.146 Rs. 100 50
No.147 Rs. 100 50
No.149 Rs. 100 50
No.150 Rs. 100 50
No.151 Rs. 100 50
No.152 Rs. 100 50
No.200 Rs. 150 50
No.203 Rs. 150/50
No.175 Rs. 50 50
No.163 Rs. 50 50
No.43 Rs. 150/50
No.44 Rs. 150/50
No.114 Rs.25 50
No.66 Rs. 50 50
No.103 Rs. 75/50
No.197 Rs. 75 50

# MERI GOLD COVERING WORKS

P.O. BOX: 1405, 14, RANGANATHAN STREET,
T. NAGAR, MADRAS-600 017, INDIA.